सोलह स्वरों को लिखें। स्वरों के आगे के कोष्ठ में कृत्तिका से आरंभ कर, सात-सात नक्षत्र पूर्वादि दिशाओं में लिखें। नक्षत्र पंक्ति के नीचे पूर्वादि दिशाओं में अवकहड आदि पाँच वर्णों को लिखें। नीचे के तीन कोष्ठों में पूर्वादि क्रम से वृषादि तीन-तीन राशियों को लिखें। श्लोकों के अनुसार सर्वतोभद्र का जो स्वरूप बनता है, उसे बाँई ओर प्रदर्शित किया गया है॥ १-६॥

| अ. | कृ. | रो. | मृ. | आ. | पु. | पु. | श्ले. | आ. |
|---|---|---|---|---|---|---|---|---|
| भ. | उ. | अ. | व. | क. | ह. | ड. | ऊ. | म. |
| अ. | ल. | लृ. | वृ. | मि. | क. | लृ. | म. | पू. |
| रे | च. | मे | ओ. | १र. ६ ११ मं. | औ | सिं | ट. | उ. |
| उ. | द. | मी. | ४ शु. ९ १४ | ५ १० १५ श. | २ च. ७ १२ बु. | क. | प. | ह. |
| पू. | स. | कुं. | अः | ३ गु. ८ १३ | अं. | तु. | र. | चि. |
| शा. | ग. | रे. | म. | धा. | वृ. | रु. | त. | स्वा. |
| ध. | ऋ. | ख. | ज. | भ. | य. | न. | ऋ. | वि. |
| ई. | श्र | अ. | उ. | पू. | मू. | ज्ये. | अ. | इ. |

॥ सर्वतोभद्रचक्रम् ॥

मंगल तथा सूर्य की ऊर्ध्वदृष्टि होती है। बुध तथा शुक्र की तिर्यग् दृष्टि होती है। गुरु और चन्द्रमा की सम दृष्टि होती है एवं शनि तथा राहु की अधोदृष्टि होती है। शनि, राहु तथा केतु और मंगल—ये क्रूर ग्रह हैं। शेष सभी शुभग्रह हैं। क्रूर ग्रह से युक्त बुध भी क्रूर होता है तथा क्षीणचन्द्रमा भी क्रूर ग्रह होता है। जिस नक्षत्र पर ग्रह रहता है, उस के दृष्टि वश से वाम, सम्मुख तथा दक्षिण—ये तीन प्रकार के वेध होते हैं। शेष श्लोकानुसार समझलें॥१०-१५॥

सूर्यमुक्ता उदीयन्ते सूर्यग्रस्तास्तगामिनः। ग्रहाद्द्वितीयगे सूर्ये स्फुरद्‌विम्बाः कुजादयः॥१६॥ समा तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे। वक्रा स्यात्पञ्चषष्ठे के ऽतिवक्राष्टसप्तमे॥१७॥ नवमे दशमे भानौ जायते कुटिला गतिः। द्वादशैकादशे सूर्ये भजते शीघ्रतां पुनः॥ अदृश्यतां पुनर्लोके व्रजन्त्यर्कं गता ग्रहाः॥१८॥ राहुकेतू सदा वक्रौ शीघ्रगौ चन्द्रभास्करौ। गतेरेकस्वभावत्वादेषां दृष्टित्रयं सदा॥१९॥ क्रूरा वक्रा महाक्रूरा सौम्या वक्रा महाशुभाः। स्युः सहजस्वभावस्थाः सौम्याः क्रूराश्च शीघ्रगाः॥२०॥

भावार्थ ॥ सूर्य से मुक्त ग्रह उदय होते हैं तथा सूर्य कालांश के अन्दर आने वाले ग्रह अस्त होते हैं । सूर्य से दूसरी राशि पर ग्रह शीघ्र गामी, तीसरे स्थान पर समगति, चौथे पर मंद गति; पाँचवें, छठे पर वक्र गति तथा सातवें-आठवें पर अति वक्र गति, नवें-दसवें में सहजगति तथा ग्यारहवें-बारहवें स्थान में शीघ्रगति होते हैं । राहु-केतु सदैव वक्रगति तथा सूर्य-चन्द्र सदैव शीघ्रगति ही होते हैं ॥ १९-२० ॥

अवर्णादिस्वरौ द्वौ द्वावेकवेधे द्वयोर्व्यधः । स्वरयुक्तात्मनोर्वेधश्चानुस्वारविसर्गयोः ॥ २१ ॥ बवौ शसौ षखौ चैव ज्ञेयौ ङ औ परस्परम् । एकेन द्वितयं शुभाशुभखगव्यधे ॥ २२ ॥ षङछाः षणठाश्चैव धफढास्थ झञास्तथा । एतत्त्रिकं त्रिकं विद्धं विद्धैः कपदभैः क्रमात् ॥ २३ ॥ षङछा रौद्रगे वेधे षणठा हस्तगे ग्रहे धफढाः पूर्वाषाढापां थझञा भाद्रउत्तरे ॥ २४ ॥ अवर्णादिस्वरद्वन्द्वे त्वेकवेधे द्वयोर्व्यधः । युक्ता स्वरात्मके वेधे त्वनुस्वारविसर्गयोः ॥ २५ ॥ कोणस्थाधिष्ण्ययोर्मध्ये अन्त्यादिपादगे ग्रहे । अस्वरादि चतुष्कस्य वेधः पूर्णातिथेः क्रमात् ॥ २६ ॥ एकादि क्रूरवेधेन फलं पुंसां प्रजापते । उद्वेगश्च भयं हानी रोगो मृत्यु क्रमेण च ॥ २७ ॥ ऋक्षे भ्रमोक्षरे हानिः स्वरे व्याधिर्भयं तिथौ । राशौ विद्धे महाविघ्नं पञ्चविद्धो न जीवति ॥ २८ ॥ एक वेधे भयं युद्धे युग्म वेधे धनक्षयः । त्रिवेधेन भवेद्भङ्गो मृत्युर्वेधचतुष्टये ॥ २९ ॥ यथा दुष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः । क्रूरयुक्ताः पुनः सौम्या ज्ञेयाः क्रूरफलप्रदाः ॥ ३० ॥ अर्कवेधे मनस्तापो द्रव्यहानिश्च भूसुते । रोगपीडाकरः सौरी राहुकेतू च विघ्नदौ ॥ ३१ ॥ चन्द्रे मिश्रफलं पुंसां रतिलाभश्च भार्गवे । बुधवेधे भवेत्प्रज्ञा जीवः सर्वफलप्रदः ॥ ३२ ॥ सौम्य पापग्रहो हन्यान्नाम्नो व्याधि धनक्षयः । वेधे वैनाशिकर्क्षस्य त्रिवेधे चायुषो भयम् ॥ ३३ ॥ स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे गृहे । अर्द्धं समगृहे ज्ञेयं पादं शत्रुगृहे स्थिते ॥ ३४ ॥ इदं च सौम्यक्रूराणां बलं स्थानवशात्मकम् । एतदेव बलं बोध्यं सौम्ये क्रूरे विपर्ययात् ॥ ३५ ॥ स्थानवेध समायोगे यत्संख्यं जायते बलम् । तत्सं-

एवं वेधपवस्तूनां फलं ज्ञेयं विचक्षणैः ॥३६॥ ग्रहाः क्रूरस्तथा सौम्या वक्रमार्गोच्चनीचगाः। स्थानं च वेध-
मित्येवं बलं ज्ञात्वा फलं वदेत् ॥३७॥ वक्रग्रहे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते। स्वभावजं फलं
शीघ्रे नीचस्थो निष्फलो ग्रहः ॥३८॥

भावार्थ॥ अवर्गादि दो- दो स्वरों में एक का वेध होने से दोनों विद्ध होते हैं। कोणस्थ
नक्षत्रों के अन्तिम और आदि चरण में ग्रह होने पर कोणस्थ स्वरों एवं मध्य स्थित पूर्णा तिथि का वेध होता
है। यदि ग्रह अपनी राशि में हो तो पूर्ण बली होता है। यदि ग्रह वक्री हो तो दूना फल, उच्च में हो तो तिगुना,
शीघ्र गति हो तो स्वभावानुसार एवं नीच में हो तो आधा फल देता है इत्यादि०॥२१-३८॥

तिथिराश्यंशनक्षत्रं विद्धं क्रूर ग्रहेण यत्। सर्वेषु शुभ कार्येषु वर्जयेत्तत्प्रयत्नतः ॥३९॥
न नन्दति विवाहे च यात्रायां न निवर्तते। न रोगान्मुच्यते रोगी वेधवेला कृतोद्यमाः ॥४०॥ रोगकाले भवे-
द्वेधः क्रूर खेचर सम्भवः। वक्रगत्या भवेन्मृत्युः शीघ्रे याप्या रुजान्वितः ॥४१॥ वेधस्थाने रणे भङ्गो
दुर्गे खण्डिः प्रजायते। कवि प्रवेशनं तत्र योधघातश्च तत्र वै ॥४२॥ यत्र पूर्वादि काष्ठायां वृषराश्यादि-
गो रविः। सा दिगस्तमिता ज्ञेया तिस्रः शेषाः सदोदिताः ॥४३॥ ईशानस्था स्वराः प्राच्यां ज्ञेया आग्नेय-
गा यमे। नैर्ऋत्यास्थास्तु वारुण्यां वायव्यां सौम्यगा मताः ॥४४॥ नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिशः
ते सर्वेस्तंगता ज्ञेया यत्र भानुस्त्रिमासिकः ॥४५॥ नक्षत्रेस्ते रुजो वर्णे हानिः शोकः स्वरेस्तगे। राशौ विघ्नं
तिथौ भीतिः पञ्चास्ते मरणं ध्रुवम् ॥४६॥ यात्रा युद्धं विवादश्च द्वारं प्रासाद हर्म्ययोः। न कर्तव्यं शुभं चान्य-
दस्ताशाभिमुखं नरैः ॥४७॥ अस्ताशायां स्थितं यस्य यदा नामाद्यमक्षरम्। तदा तु सर्वकार्येषु ज्ञेयो
दैवहतो नरः ॥४८॥ कवौ कोटे तथा द्वन्द्वे चातुरंगे महाहवे। उद्यमोस्तंगतैर्योधैर्वर्जनीयो जयार्थिभिः ॥४९॥
नक्षत्राभ्युदिते पुष्टिर्वर्णे लाभः स्वरे सुखम्। राशौ जयस्थितौ तेजः पदाप्तिः पंचकोदये ॥५०॥

भावार्थ ॥ जो तिथि, राशि, अंश, नक्षत्र क्रूरग्रह से बिद्ध हो, उसे सभी शुभ कार्यों में त्याग देना चाहिए। वेध स्थान में कोई भी कार्य करने से असफलता मिलती है। जिन राशि-दिशाओं में सूर्य रहता है, वे दिशाएं अस्त होती हैं। जिस दिशा में त्रैमासिक सूर्य हो, उस दिशा के नक्षत्र, स्वर, वर्ण, राशि, तिथि और दिशा अस्त हो जाते हैं ॥ ३९-४५॥ नक्षत्र अस्त हो तो रोग, वर्ण अस्त हो तो हानि, स्वर अस्त हो तो शोक, राशि अस्त हो तो विघ्न एवं तिथि अस्त हो तो भय होता है। उदित नक्षत्र, राशि आदि सुखद होते हैं ॥४६-५०॥

प्रश्नकाले भवेद्विद्धं यल्लग्नं क्रूरखेचरैः। तद्दुष्टं शोभनं सौम्यैर्मिश्रैर्मिश्रफलं मतम् ॥५१॥ ग्रहाभिन्नं तु यल्लग्नं फलं लग्नस्वभावतः। ज्ञातव्यं देशि केन्द्रेण भाषितं पच्चरादिकम् ॥ क्रूरैरुभयतो विद्धा यस्याऽक्षर तिथिस्वराः। राशिर्धिष्ण्यं च पंचापि तस्य मृत्युर्न संशयः ॥ ५३॥ मण्डलं नगरं ग्रामो दुर्गं देवालयं पुरम्। क्रूरैरुभयतो विद्धं विनश्यति न संशयः ॥५४॥ कृत्तिकादित्रिकाद्ये मे क्रूरविद्धे च कूर्मतः। देशानाभिस्थदेशाद्या विनश्यंति यथा क्रमम् ॥ ५५॥ कृत्तिकायां तथा पुष्ये रेवत्यां च पुनर्वसौ। सर्वं विद्धे सति क्रमोद्धेधो वर्णेषु ब्राह्मणादिषु ॥ ५६॥ तैलं भाण्डं रसो धान्यं गजाश्वादि चतुष्पदम्। सर्वं महर्घतां याति यत्र क्रूरो व्यवस्थितः ॥५७॥ क्रूरवेधसमायोगे यस्योपग्रहसम्भवः। तस्य मृत्युर्न सन्देहो रोगाद्वाथ रणेपि वा ॥५८॥ सूर्यभात्पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम्। शूलं चाष्टमभं प्रोक्तं सन्निपातं चतुर्दशम् ॥५९॥ केतुरष्टादशे प्रोक्त उल्का स्यादेकविंशतौ। द्वाविंशतितमे कम्पस्त्रयोविंशे च वज्रकम् ॥६०॥ निर्घातश्च चतुर्विंशे उक्ता अष्टावुपग्रहाः। स्वस्थाने विघ्नदाः प्रोक्ताः सर्वकार्येषु सर्वदा ॥ ६१॥ जन्मभं कर्म आधानं विनाशं सामुदायिकम्। सांघातिकमिदं धिष्ण्यं षट्कं सर्वजनीनकम् ॥ ६२॥ ज्ञातिदेशाभिषेकैश्च नवधिष्ण्यानि भूपतेः। वेधं ज्ञात्वा फलं ब्रूहि सौम्यैः क्रूरैः शुभाशुभम् ॥ ६३॥ जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञकम्। एकोनविंशमाधानं त्रयोविंश वि-

नाशभम् ॥६४॥ अष्टादशं च नक्षत्रं सामुदायिक संज्ञकम् । सांघातिक च विज्ञेयमृक्षं षोडशमत्र हि॥६५॥ षट्त्रिभं राज्यभं प्रोक्तं जातिनाम स्वजातिभम् । देशभं देशनामर्क्षं राज्यर्क्षमभिषेकभम् ॥६६॥ मृत्युः स्याज्जन्मभे विद्धे कर्मभे क्लेश एव च । आधानर्क्षे प्रवासः स्याद्विनाशे बंधुविग्रहः ॥ ६७॥ सामुदायिकभेऽनिष्टं हानिः सांघातिके तथा । जातिभे कुलनाशश्च बन्धनं चाभिषेकभे ॥६८॥ देशर्क्षे देशभङ्गश्च क्रूरैरेवं शुभैः शुभम् । उपग्रहसमायोगान्मृत्युर्भवति नान्यथा ॥ ६९॥ भयं भङ्गश्च घातश्च मृत्युर्भङ्गः पुरःस्थितैः । क्रूरैरेकादिपञ्चान्तैर्युधि वेधे फलं भवेत् ॥७०॥

भावार्थ ॥ प्रश्नकालिक लग्न यदि क्रूर ग्रह से विद्ध हो तो अशुभ फल होता है। शुभग्रह से विद्ध हो तो शुभ फल होता है। कृत्तिकादि तीन-तीन नक्षत्रों से कूर्मचक्र में कूर्म के ९ अंगों की कल्पना करके उसमें देश-विभाग करे। उसमें क्रूर ग्रह से वेध होने पर विनाश होता है। जिस का उपग्रह सम्बन्धी क्रूर ग्रह का वेध होता है, उसकी रोग या संग्राम से मृत्यु होती है। उपग्रह आठ हैं, जिनके नामों का श्लोकों में उल्लेख किया गया है। ये सभी कार्यों में अपने भोग काल तक सदैव विघ्न करते हैं। जन्म-नक्षत्र, कर्म, आधान, विनाश, सामुदायिक तथा सांघातिक- ये ६ नक्षत्र नाड़ी-संज्ञक सभी के लिए हैं। राजाओं के लिए जाति, देश तथा अभिषेक नक्षत्र सहित ९ नक्षत्र नाड़ी-संज्ञक कहे गए हैं। इनमें शुभग्रह तथा पापग्रह के वेध से शुभाशुभ फल होता है॥५१-७०॥

तिथिमृक्षं स्वरं राशिं वर्णं चैव तु पञ्चकम् । यद्दिने विध्यते चन्द्रस्तद्दिने स्याच्छुभाशुभम् ॥ ७१॥ अथार्घ्यं सम्प्रवक्ष्यामि यदुक्तं ब्रह्मयामले । एकाशीतिपदे चक्रे ग्रहवेधाच्छुभाशुभम् ॥ ७२॥ देशः कालस्ततः पण्यमिति त्रीण्यर्घनिर्णये । चिन्तनीयानि वेध्यानि सर्वकालं विचक्षणैः ॥७३॥ देशोऽथ मण्डलं स्थानमिति देशस्त्रिधोच्यते । वर्षं मासो दिनं चेति त्रिधा कालोऽपि कथ्य

-ते ॥ ७४ ॥ धातुर्मूलं च जीवश्च इति पण्यं त्रिधा मतम् । अथ त्रिकत्रिकस्यास्य वक्ष्यामि स्वामिखेच-
रान् ॥ ७५ ॥ देशेशा राहुमन्देज्या मण्डलस्वामिनः पुनः । केतु सूर्यसिताः स्थाननाथाश्चन्द्रारचन्द्रजाः ॥ ७६ ॥
वर्षेशा राहुकेत्वार्की जीवो मासाधिपः पुनः । भौमार्कज्ञसिता ज्ञेयाश्चन्द्रः स्याद्दिवसाधिपः । ७७ ॥ धात्वी-
शाः सौरिपातारा जीवेशा ज्ञेन्दुसूर्यः । मूलेशाः केतुशुक्रार्की इति पण्याधिपा ग्रहाः ॥ ७८ ॥ पुंग्रहा राहुकेत्वर्क
जीवभूमिसुता मताः । स्त्रीग्रहौ शुक्रशशिनौ सौरि सौम्यौ नपुंसकौ ॥ ७९ ॥ सितेन्दू सितवर्णौ द्वौ रक्ते
-द्वौ भौमभास्करौ । पीतौ सौम्यगुरू कृष्णा राहुकेत्वर्कजा मताः ॥ ८० ॥ ग्रहो वक्रोदये स्वांशे उदये च
बलाधिकः । देशादीनां स एकैकः स्वामी खेटस्तदा मतः ॥ ८१ ॥ वक्रोच्चगः स्वहर्म्येषु पूर्णवीर्यो ग्रहो
भवेत् । मेषो वृषो मृगः कन्या कर्कमीन तुलाधराः ॥ ८२ ॥ आदित्यादिग्रहोच्चाः स्युर्नीचं यत्तस्य सप्तमम् ।
परमोच्चादिशो रामा अष्टाविंशास्तिथीन्द्रिया ः ॥ ८३ ॥ सप्तविंशास्तथाविंशाः सूर्यादीनां तथांशकाः ।
परमोच्चात्परं नीचमर्धचक्रान्तसंख्यया ॥ ८४ ॥ उच्चान्नीचाच्च यत्तुर्यं समं स्थानं तदुच्यते । तदग्रपृष्ठगे
खेटे बलं त्रैराशिकं मतं ॥ ८५ ॥ उच्चस्थे च बलं पूर्णं नीचांशस्थे बलं दलम् । स्वक्षेत्रस्थे बलं पूर्णं पादो-
-नं मित्रभे गृहे ॥ ८६ ॥ अर्धं समगृहे ज्ञेयं पादं शत्रुगृहस्थिते । त्रैराशिकवशाज्ज्ञेयमन्तरे तु बलं बुधैः
॥ ८७ ॥ एवं देशादिनाथा ये ग्रहवेधे व्यवस्थिताः । सुहृदः शत्रवो मध्याश्चिन्त्यनीयाः प्रयत्नतः ॥ ८८
स्वमित्रसमशत्रूणां वेधे देशादिषु क्रमात् । शुभग्रहः शुभं धत्ते चतुस्त्रिद्व्येकपादकैः ॥ ८९ ॥
स्वमित्र सम शत्रूणां वेधे देशादिषु क्रमात् । दुष्टं दुष्टग्रहः कुर्यादेकद्वित्रिचतुःपदैः ॥ ९० ॥

भावार्थ ॥ तिथि, नक्षत्र, स्वर राशि और वर्ण – ये पाँचों जिस दिन पापग्रह
अथवा शुभग्रह से बिद्ध हों, उसी दिन यदि चन्द्रमा से भी बिद्ध हों तो शुभाशुभ फल होता है ॥ ७१ ॥
८१ पद वाले चक्र में ग्रहों के वेध से शुभाशुभ फल जानना चाहिए । देश, काल और बेचने वाली वस्तु

इन तीनों के वेध को देख कर वेध का फल निश्चित करना चाहिए । देश, मण्डल और स्थान -इस प्रकार से देश तीन तरह का होता है । वर्ष, मास और दिन -ये तीन भेद काल के हैं । इसी भाँति विक्रेय वस्तु के भी तीन भेद होते हैं ॥७२-७५॥ राहु, शनि और गुरु -ये देश के; केतु, सूर्य और शुक्र -ये मण्डल के तथा चन्द्रमा, मंगल और बुध ये स्थान के स्वामी हैं । ग्रहों के वर्ण, स्त्री-पुरुष भेदादि का उल्लेख श्लोकों में किया गया है ॥७६-८१॥ जब ग्रह वक्री अथवा अपनी उच्च राशि अथवा स्वराशि में हो तो बली होता है । बली ग्रह शुभ तथा निर्बल ग्रह अशुभ फल देता है, इत्यादि ॥८२-९०॥

विद्धं पूर्णदृशा पश्यंस्तत्पादेन फलं ग्रहः । विदध्यात्तन्यथा ज्ञेयं फलं दृष्ट्यानुमानतः ॥९१॥ वर्णादि स्वर राशीनां मेषाद्ये राशिमण्डले । ग्रहदृष्टिवशात्सोपि वेधो वर्णादिके मतः ॥९२॥ स्वर वर्णाः स्वचक्रोक्तास्तिथिवेधे च पीडिताः । तिथौ वर्णे च राशौ च स्वदृष्ट्या दृष्टिजं फलम् ॥९३॥ अशुभो वा शुभो वापि शुक्ले विध्येत्तिथिं ग्रहः । सर्वं निजफलं दत्ते कृष्णपक्षे तु तद्दलम् ॥९४॥ खेटस्य स्वांशके ज्ञेया पूर्णा दृष्टिः सदा बुधैः । दृष्टिहीने पुनर्वेधे न स्यात्किञ्चिच्छुभाशुभम् ॥९५॥ इत्येवं दृष्टिभेदेन निर्दिष्टं सकलं फलम् । वर्णादि पञ्चके विद्धग्रहो दत्ते शुभाशुभम् ॥९६॥ सौम्यः पूर्णदृशा पश्यन्विध्यन्वर्णादिपञ्चकम् । फलं विंशोपकाः पञ्च क्रूरस्तु चतुरो दिशेत् ॥९७॥ वेधो वर्णादिके यावत् स्थान वेधे च यावती । दृष्टिस्तदनुमानेन वाच्यो विंशोपका बुधैः ॥९८॥ एवं विंशोपका यत्र सम्भवन्ति शुभाशुभाः । अन्योन्यं शोधयेत्तेषां शेषं ज्ञेयं शुभाशुभम् ॥९९॥ वर्तमानार्घविंशांश कल्पनास्तेषु च क्रमात् । वर्तमानार्घके देया पात्या चैव शुभाशुभे ॥१००॥ देशध्वंसः प्रजापीडा नृपतिप्रबधस्तथा । यत्र दृष्टिश्च तत्र स्यादुर्भिक्षं मण्डले स्फुटम् ॥ १०१ ॥ अकालेपि फलं पुष्पं वृक्षाणां यत्र जायते । स्वजाति मांस भुक्तिश्च दुर्भिक्षं तत्र रौरवम् ॥१०२॥ परचक्रागमस्तत्र

विग्रहश्च स्वराजके। ऋतोर्विपर्ययो यत्र दुर्भिक्षं मण्डले भवेत् ॥२०३॥ भूमिकम्पो रजःपातो रक्तवृष्टिश्च जायते। देशे सर्वसुखो येते वेधादेवं वदे बुधः ॥२०४॥ वृक्षाणां जायते वृद्धिः स्वकाले फलपुष्पयोः। सुभिक्षं क्षेमारोग्यं च प्रजानां तत्र जायते ॥२०५॥ स्वचक्रं परचक्रं च न कदाचित्प्रजायते। बान्धवाः सुहृदस्तत्र शुभानां वेध संभवे ॥२०६॥ दीपो यथा गृहस्यान्तरुद्द्योतयति सर्वतः। तथेदं सर्वतोभद्रं चक्रं ज्ञानप्रकाशकम् ॥२०७॥ विना बलिं विना होमं कुमारीपूजनं विना। शुभग्रहं विना देवि चक्रराजं न वीक्षयेत्॥२०८॥ अविचार्यतया पृच्छेत्पृच्छकः कथकस्तथा। द्वाविमौ विघ्नदौ प्रोक्तावत्र देवि न संशयः ॥२०९॥ जातकं च तिथिं राशिं विलेपं नामतोज्ज्वलो। अज्ञातजातकानां तु समस्तमभिधानतः ॥२१०॥ विस्तारेण मयाख्यातं यथोक्तं ब्रह्मयामले। न देयं यस्य कस्यापि चक्रमेतत्सुनिश्चितम् ॥२११॥ इति सर्वतोभद्रचक्रं समाप्तम् ॥

भावार्थ ॥ देशादि की नाम-राशि दृष्टि-फल के अनुसार ही फल देती है। चक्र में वर्णित स्वर, वर्ण आदि तिथि-वेध से पीड़ित होते हैं। तिथि, वर्ण तथा राशि में दृष्टि के अनुसार ही फल होता है। यदि ग्रह अपनी राशि तथा अंश में हो तो उसकी पूर्ण दृष्टि होती है ॥९१-९६॥ यदि शुभग्रह पूर्णदृष्टि से वर्ण आदि पाँचों को वेध करते हों तो विंशोपक फल ५ और क्रूरग्रह वेध करता हो तो ४ विंशोपक फल होता है। वर्ण आदि के स्थान-भेद में जितनी दृष्टि हो, उसी के अनुमान से विंशोपक लेना चाहिए। धान्य आदि के भावों में भी नाम से विंशोपक लाकर उनका शुभाशुभ फल कहना चाहिए ॥९७-२००॥ जिस देश में अधिक क्रूरग्रह का वेध और दृष्टि हो, वहाँ प्रजा को पीड़ा, दुर्भिक्ष आदि दुष्ट फल होते हैं। जहाँ ऋतु का विपर्यय हो वहाँ भी अनिष्ट होते हैं। जहाँ ऋतु के अनुकूल वृक्ष फूलें फलें वहाँ सुभिक्ष होता है तथा प्रजा सुख से रहती है ॥२०१-२११॥ इति सर्वतोभद्रचक्र प्रकरणम् ॥

अथ शतपद चक्र प्रकरणम् ॥ चक्रं शतपदं वक्ष्ये भपादाक्षर संभवम्। नामादिवर्णतोज्ञेया ऋक्षराश्यंशकास्तथा ॥१॥ तिर्यगूर्ध्वगता रेखा रुद्रसंख्या लिखेद्बुधः जायते कोष्ठकानां तु शतमेकं न संशयः ॥२॥ न्यसेदवकहडादीनि रुद्रादि विदिशि क्रमात्। पञ्च पञ्च क्रमेणैव शुद्धवर्णान्नियोजयेत् ॥३॥ पञ्च स्वर समायोगादेकैकं पञ्चधा कुरु। कुर्यात्कुघुभुदुस्थाने त्रीणि त्रीण्यक्षराणि च ॥४॥ कुघङच्छ भवेत्स्तम्भे रौद्रे त्वीशान गोचरे। घृजणठ भवेत्स्तम्भे हस्ते आग्नेय संज्ञके ॥५॥ ऋक्षे पूर्वाभुध फढं स्तम्भे नैर्ऋत्यगोचरे। दुथझञा स्तथा वायौ स्तम्भ उत्तर भाद्रके ॥६॥ आर्द्रा हस्तास्तथाषाढ पूर्वोत्तरपदाभिधे। एवं स्तम्भ चतुष्कं च ज्ञातव्यं स्वरवेदिभिः ॥७॥ धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः। साभिजित्यंशकास्तस्य शतैकं द्वादशाधिकम् ॥८॥ यदृक्षांशक कोष्ठस्थः क्रूरः सौम्योपि वा ग्रहः। ततस्तद्वेधयेत्तिर्यक् पुंसो नामाद्यमक्षरम् ॥९॥ सौम्यवेधे शुभं ज्ञेयमशुभं पापखेचरैः। मिश्रैर्मिश्रफलं तत्र निर्वेधेन शुभाशुभम् ॥१०॥ यदुक्तं सर्वतोभद्रे ग्रहोपग्रहवेधतः। शुभाशुभफलं सर्वं तदिहापि विचिन्तयेत् ॥११॥

भावार्थ ॥ अब नक्षत्र-चरणों के अक्षर से उत्पन्न शतपद नामक चक्र का उल्लेख किया जाता है ॥ नाम के आदि वर्ण से नक्षत्र-राशि एवं अंश का ज्ञान प्राप्त करें। ग्यारह तिरछी तथा ग्यारह ऊर्ध्वाधर रेखाएं खींच कर १०० कोष्ठक का चक्र तय्यार करें। उनमें ईशान कोण से क्रमशः अवकहड, मटपरत, नयभजख तथा गसदचल — इन पाँच-पाँच वर्णों को लिखें। इन्हीं वर्णों में अइउएओ — इन पाँच स्वरों के संयोग से एक-एक के पाँच भेद करें। इस प्रकार अक्षरों के रखने से चक्र में चार स्तम्भ हो जाते हैं। कृत्तिकादि अभिजित् सहित चार-चार अक्षरों से युक्त भरणी पर्यन्त २८ नक्षत्र ११२ अंशों के साथ होते हैं। जिस नक्षत्र के जिस अंश के कोष्ठ में पापग्रह अथवा शुभग्रह हो, वहाँ से पुरुष के अथवा देशादि के नाम के अक्षर से उत्पन्न नक्षत्र के अंश और नक्षत्र को तिर्यक् वेध करता है। शुभग्रह के वेध से शुभ तथा अशुभग्रह के वेध से अशुभ फल होता है।

सर्वतोभद्रचक्र में ग्रह-उपग्रह के वेध से जो शुभाशुभ फल कहे हैं, वे सभी इसमें भी विचारणीय हैं ॥ १-११॥

अथ अंश चक्र प्रकरणम् ॥ अष्टाविंशोर्ध्वगा रेखा अष्टविंशति तिर्यगा: । अंशचक्रं भवत्येवं यदुक्तमादियामले ॥ १॥ कृत्तिकादीनि भान्यत्र पादाक्षर क्रमेण च । साभिजित्विन्यसेत्सर्वाण्यष्टाविंशति संख्यया ॥ २॥ यो ग्रहो यत्र ऋक्षांशे तं तत्रैव न्यसेद् बुध: । वेधयेत्सम्मुखं वर्णं क्रूरो वाथ शुभोपि वा ॥ ३॥ आद्यांशेन चतुर्थांशं चतुर्थांशेन चाद्यिमम् । द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् ॥ ४॥ यस्य नामाक्षरं विद्धमंशचक्रे ग्रहेण तु । क्रूरैरिष्टं शुभैर्हानिर्द्व्याद्यैर्मृत्युर्न संशय: ॥ ५॥ क्रूरो भयस्थिते वेधे मृत्युर्विघ्नं शुभाशुभै: । शुभोभयगते वेधे व्याधि: पीडा च बन्धनम् ॥ ६॥ वैधव्यं च विवाहे च यात्रायां न निवर्तते । रोगे मृत्यू रणे भङ्ग: क्रूरवेधे न संशय: ॥ ७॥ अद्रय: सागरा नद्यो देवग्रामपुराणि च । क्रूरवेधे विनश्यन्ति नात्र कार्य विचारणा ॥ ८॥ चन्द्रऋक्षांशके वेधो भवेद्यद्यपर ग्रहै: । तन्मानं तद्दिने वर्ज्यं सर्वदा शुभकर्मणि ॥ ९॥ इति अंशस्वर चक्रम् ॥

भावार्थ ॥ २८ तिरछी तथा २८ सीधी रेखा खींचने से अंशचक्र बनता है। इस चक्रमें ईशान कोण की रेखा से, कृत्तिका से आरंभ कर, अभिजित् सहित २८ नक्षत्रों के चरणाक्षरों को रखना चाहिए। इस प्रकार जिस चरण पर जो ग्रह हो, उसे उसी नक्षत्र-चरण पर रखें तो वह अपने सामने वाले नक्षत्र-चरण का वेध करेगा। यदि शुभ ग्रह वेध करे तो हानि एवं दो-तीन पाप ग्रह वेध करें तो मृत्यु होती है। यदि एक रेखा स्थित दोनों के चरणों को क्रूरग्रह से वेध होता हो तो मृत्यु होती है। शुभ और पाप- दोनों ग्रह वेध करें तो विघ्न, दोनों शुभ ग्रह वेध करें तो व्याधि, बंधन और पीड़ा; केवल क्रूर ग्रह का ही वेध हो तो यात्री का न लौटना और रोगी की मृत्यु होजाना - यह कहना चाहिए। नाम-नक्षत्र को क्रूर ग्रह वेध करता हो तो नाश होता है। जिस नक्षत्र पर चन्द्रमा हो, उसभाग को भौमादि ग्रह वेध करते हों तो उस नक्षत्रांश एवं नक्षत्र को शुभ कार्य में त्याग देना चाहिए ॥ १-९॥ इति अंश-स्वर चक्र॥

अथ चामर चक्राणि ॥ आदौ चक्रं समालिख्य छत्रत्रय सुशोभनम् । अश्विन्यादि न्यसेत्तत्र सप्तविंशति भानि च ॥१॥ अश्विन्याद्यं मघाद्यं च मूलाद्यं च क्रमेण च । उत्तरे पूर्वदक्षे च एतच्छत्रत्रयं मतम् ॥२॥ प्रतीची मध्यरेखाग्रादीशानान्तं हयाधिपः । आग्नेयान्तं नराधीशस्तन्मध्ये च गजाधिपः ॥३॥ अन्येषां भूभृता मृक्षं यत्रच्छत्रे व्यवस्थितम् । तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदम् ॥४॥ चामरं कलशं वीणा छत्रं दण्डं पतद्ग्रहः । आसनं कीलकं रज्जुर्नव भेदाः प्रकीर्तिताः ॥५॥ छत्रत्रये स्थितः सौरिर्भंगं तस्य विनिर्दिशेत् । फलं च चामरादीनां प्रत्येकं च वदाम्यहम् ॥६॥ चामरे चण्डता वायोरनावृष्टिश्च जायते । दुर्भिक्षं च भवेद्घोरं प्रजापीडा न संशयः ॥७॥ कलशस्थे भवेद्युद्धं रणे रोगे महद्भयम् । घातपातादिकं सर्वं जायते नात्र संशयः ॥८॥ वीणास्थेनार्कपुत्रेण पट्टराज्ञी विनश्यति । चलच्चित्तो भवेद्राजा भयभीता च मेदिनी ॥९॥ यदा क्रूरस्त्रये सौरिश्छत्रे दण्डे पतद्ग्रहे । तदा तस्य भवेद्भङ्गश्छत्रस्यापि न संशयः ॥१०॥ आसनस्य भवेन्नाश आसनस्थे शनैश्चरे । युवराजक्षयः कीले बंधनं रज्जुसंस्थिते ॥११॥ सौम्ययुक्तोऽतिचारस्थः शनिरुक्तफलो नहि । वक्रगः क्रूरसंयुक्तः शनिरुक्तफलप्रदः ॥१२॥ शनिराहुकुजादित्या यदा जीवेन्दुसंयुताः । उत्तराधीशराज्ञां च निश्चितं छत्रभङ्गदाः ॥१३॥ क्रूरग्रहचतुष्कं च बुधचन्द्रेण संयुतम् । पूर्वच्छत्रविनाशाय कथितं पूर्वसूरिभिः ॥१४॥ एवं पापचतुष्कं च यदा शुक्रेन्दुसंयुतम् । दक्षिणाधिपतेश्छत्रविनाशो भाषितो बुधैः ॥१५॥ एवमन्येषु राज्येषु यत्र यस्य च सम्भवः । उक्तग्रहसमायोगाच्छत्रभङ्गं विनिर्दिशेत् ॥१६॥ यथा दुष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः । क्रूरयुक्तो बुधः क्रूरश्चन्द्रः शुभयुतः शुभः ॥१७॥ यथा दुष्टफलः सौरिस्तथा सौम्यफलो गुरुः । भौमशुक्रौ गुरुराहू च रविचन्द्रौ फले समौ ॥१८॥ यथा हानिकराः क्रूरास्तथा सौम्याः शुभङ्कराः । क्रूरयुक्तो भवेत् क्रूरश्चन्द्रः सौम्ययुतः शुभः ॥१९॥ सौम्यक्रूरा यदा छत्रे अथवैकत्र संस्थिताः । छत्रभङ्गो भवेत्तस्य परचक्रागमेन च ॥२०॥ अन्येषां भूभृतामृक्षं यत्र यत्र नृपत्रये । चामरा-

ऽभिधानेन तस्य यन्नाम जायते ॥ २१ ॥ तत्तत्फलं तदा वाच्यमन्यदेशमहीपतेः । नृपतित्रयनाम्नैव न वाच्यं छत्रजं फलम् ॥२२॥ भूपनामर्क्षगो राहुः केतुर्वा यदि संस्थितः । छत्रभङ्गो भवेत्तस्य विषदानेन भूपतेः ॥ २३ ॥ मृगयां साहसं यात्रां दुष्टाश्वगज वाहनम् । विग्रहं च त्यजेद्राजा छत्रस्थैः क्रूरखेचरैः ॥ २४ ॥ एवं ज्ञात्वा यदा राजा करोति ग्रह शान्तिकम् । यदुक्तं यामलेतंत्रे शान्तिः स्यात्तेन भूपतेः ॥ २५ ॥ इति छत्र चक्राणि ॥

भावार्थ ॥ अब चामर चक्र के विषय में कहते हैं। पहले तीन छत्र चक्र बना कर उसमें अश्विनी से रेवती तक नक्षत्रों को लिखें। जिस प्रकार आगे कहे गए कूर्मचक्र में पूर्वापर आदि रेखाओं में दिशा के विभाग से देशों का स्थापन किया है, उसी प्रकार पश्चिम से आरंभकर ईशान कोणस्थ देशों के स्वामी की संज्ञा हयाधिपति तथा अन्य कोणों से भी इसीप्रकार स्वामी गजाधिपति आदि की कल्पना कर, राजाओं के नाम के नक्षत्र जहाँ पर हों, उस चक्र से शुभाशुभ का विचार करना चाहिए। शनि, छत्र, दंड एवं पतद्ग्रह के नक्षत्रों में हो तो राजा का छत्रभंग होता है इत्यादि श्लोकों के अनुसार समझलें। यदि शनि शुभ ग्रह से युक्त अतिचारी हो तो पूर्वोक्त फल नहीं होता। यदि चार क्रूर ग्रह शुक्र तथा चन्द्रमा से युक्त हों तो दक्षिण दिशा में स्थित चक्र के राजा का नाश होता है। इसी तरह अन्य राजाओं का भी, जहाँ जिस चक्र में संभावना हो, नाश कहना चाहिए। जिस प्रकार क्रूर ग्रह दुष्ट फल देते हैं, उसी प्रकार शुभग्रह शुभ फल देते हैं, जिस राजा के जन्म नक्षत्र पर शुभ-अशुभ ग्रह दोनों हों, उसके लिए शुभ फल होता है। अश्वपति, गजपति, नरपति नाम के तीनों चक्रों में जिस चामरादि खंड में अन्य राजाओं के नाम नक्षत्र एवं जन्म नक्षत्र पड़ें, उनकी वही संज्ञा होती है। उसी संज्ञा के अनुरूप उनका फल कहना चाहिए, केवल तीनों चक्रों के नाम से ही फल नहीं कहना चाहिए। दुष्ट फल को जानकर, यामलतंत्र में वर्णित विधान से ग्रह-शान्ति करने पर शुभ फल की प्राप्ति होती है ॥ १-२५ ॥ इति चामर छत्रचक्रवर्णनम् ॥

अथ सिंहासनचक्रम् ॥ इत्येवं सम्प्रवक्ष्यामि चक्रं सिंहासनत्रयम् । येन विज्ञानमात्रेण क्रियते राज्यनिर्णयः ॥१॥ सप्तविंशतिनक्षत्रैरेकैकं च नवात्मकम् । अश्विनी मघमूलाद्यं पंचनाडीविभेदतः ॥२॥ अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितम् । मूलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम् ॥३॥ इतरेषु च राज्येषु नृपनामर्क्षतो वदेत् । शुभाशुभमिदं सर्वं यस्य यत्र शनिस्थितः ॥४॥ नाडिकापञ्चवेधेन एकैकस्यासनं भवेत् । आधारमासनं पट्टं सिंहं सिंहासनं तथा ॥५॥ आधारादिफलं सर्वमेकैकस्य वदाम्यहम् । ग्रहवेधवशाज्ज्ञेयं सौम्यक्रूरैः शुभाशुभम् ॥६॥ नृप आधारनाड्यृक्षे यदा पट्टेऽभिषेचितः । पराधीनगतं राज्यं कुरुते नात्र संशयः ॥७॥ आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः । प्रधानपुरुषादेशात्प्रजाशान्तिकरो भवेत् ॥८॥ पट्टऋक्षे यदा राजा चोपविष्टो यदासने । पूर्वराज्यस्थितेस्तुल्यां चिरं पालयते महीम् ॥९॥ सिंहरूपी भवेद्राजा सिंहऋक्षासने स्थितः । संग्रामस्य प्रियो नित्यमसाध्यो मन्त्रिणां सदा ॥१०॥ सिंहासनगते ऋक्षे तेजस्वी भीषणाकृतिः । चलचित्तो भवेत् क्रोधी प्रजापीडाकरो नृपः ॥११॥ तत्कालेनुगते ऋक्षे क्रूरनिर्वेधनाडिके । शुभावस्था शुभे लग्ने संस्थाप्यो नृप आसने ॥१२॥ ईदृशे च समायोगे उपविष्टो य आसने । उच्छिद्य शत्रुसङ्घातमेकच्छत्रं करोति सः ॥१३॥ क्रूरग्रहस्य नाड्यां चेदुपविष्टो य आसने । बन्धनं भूमिनाशश्च तथा मृत्युश्च जायते ॥१४॥ आधारऋक्षगः सौरिरनावृष्टिं करोति सः । दुर्भिक्षं रौरवं घोरं प्रजामृत्युश्च जायते ॥१५॥ आसने च यदा सौरिर्युद्धे भङ्गप्रदो भवेत् । अथवा व्याधिपीडा च घातदुःखं च जायते ॥१६॥ पट्टऋक्षे यदा सौरिः पट्टराज्ञी विनश्यति । प्रियो वाथ कुमारो वा मंत्रिवर्गर्क्षयोऽपि वा ॥१७॥ सिंहे सिंहासने वाथ यदा तिष्ठति सूर्यजः । तदा मृत्युर्न संदेहो यदि शक्रसमो नृपः ॥१८॥ शनिराह्वर्कमाहेया यदा चन्द्रर्क्षसंयुताः । यस्यासनगता एते तदा तस्य क्षयं कराः ॥१९॥ क्रूरयुक्तोऽतिवक्रस्थः क्रूरनाडीगतोऽपि वा । आसने चन्द्रयोगेन कालरूपी शनै-

एचर: ॥२१॥ एवं शुभ फलं दद्याद्देवमन्त्री न संशय: । करोति विपुलं राज्यं यस्यासनगतो भवेत् ॥२१॥
इति सिंहासन-चक्रम् ॥

भावार्थ॥ अब तीन सिंहासन-चक्र के विषय में कहा जाता है. प्रत्येक सिंहासन-चक्र नौ-नौ नक्षत्रों के होते हैं, जिनमें पहला अश्विनी से. दूसरा मघा से तथा तीसरा मूल से रेवती तक नक्षत्रों का होता है। सिंहासन पाँच सीढ़ियों का होता है। सबसे नीचे की सीढ़ी की आधार संज्ञा, उससे ऊपर वाली की आसन, उससे ऊपर वाली की पट्ट, उससे ऊपर वाली की सिंह तथा सबसे ऊपर वाली की सिंहासन संज्ञा होती है। प्रत्येक आधारादि का शुभ तथा क्रूर ग्रह के वेध द्वारा शुभाशुभ फल कहना चाहिए। आधार स्थित नक्षत्र में राजा का राज्याभिषेक हो तो पराधीन रहकर राज्य करनेवाला, आसन में हो तो नीतिज्ञ तथा प्रजा में शान्ति-स्थापक, पट्ट में हो तो पृथ्वी का शासक, सिंह में हो तो पुरोहित एवं मंत्रियों को असाध्य तथा सिंहासन में हो तो तेजस्वी, चंचलचित्त, क्रोधी तथा प्रजा को पीड़ा देने वाला होता है। राज्याभिषेक के समय का नक्षत्र ही चन्द्र नक्षत्र मानना चाहिए। वह क्रूर ग्रह के वेध से रहित हो तथा चन्द्रमा शुभ स्थिति में हो तो राज्याभिषेक करना चाहिए। ऐसा राजा शत्रुजयी तथा एकछत्र शासक होगा। क्रूर ग्रह की नाड़ी होने पर राज्य-नाश, बन्धन, मृत्यु आदि अशुभ फल होते हैं। आधार नक्षत्र पर शनि हो तो अनावृष्टि और प्रजा-पीड़ा, आसन पर हो तो युद्ध में पराजय अथवा क्लेश, पट्ट में हो तो पटरानी अथवा प्रिय कुमार अथवा मन्त्रियों का नाश एवं सिंह अथवा सिंहासन में हो तो इन्द्रतुल्य राजा की भी मृत्यु अवश्य होती है। यदि चन्द्र नक्षत्र पर शनि, राहु, सूर्य तथा मंगल एकत्र हों और आसन में हो तो राजा का नाश कहना। शनि क्रूरग्रह से युक्त होकर अतिवक्री हो या क्रूरनाड़ी में गया हो तो कालरूप होता है। गुरु शोभन वर्ग आदि में होकर जिसके आसन में गया हो, उसके राज्य की वृद्धि होती है ॥१-२१॥ इति॥

अथ कूर्मचक्रम् ॥ कूर्मचक्रं प्रवक्ष्यामि यदुक्तं कोशलागमे। यस्य विज्ञानमात्रेण ज्ञायते देशविप्लवः ॥ १॥ यस्य शृङ्गैकदेशस्था देवास्त्रिंत्रिंशकोटयः। सुमेरुः पृथिवीमध्ये श्रूयते दृश्यते न तु ॥२॥ तादृशाः पर्वताश्चाष्टौ सागराद्वीपदिग्गजाः। सर्वे ते विधृता भूम्या सा धृता येन तं शृणु ॥३॥ दंष्ट्रया सा वराहेण विधृता सागरा धरा। मुस्तारवननतोयस्य शोभते मृत्तिकेव या ॥४॥ ईदृशोऽसौ महाकायो वराहः शेषमस्तके। तस्य चूडामणेरूर्ध्वं संस्थितो मशकोपमः ॥५॥ एवं विधः सशेषोऽपि कुण्डली भूमिसंस्थितः। कूर्मपृष्ठैकभागेन यत्नतन्तुरिवाबभौ ॥६॥ वपुः स्कन्धः शिरः पुच्छनखांघ्रिप्रभृतीनि च। मानेन तस्य कूर्मस्य कथयामि प्रयत्नतः ॥७॥ शङ्कोः शतसहस्राणि योजनानि वपुःस्थितम् तदर्धेन भवेत्पुच्छं पुच्छार्धेन द्विकुक्षिकम्। ग्रीवा सायुतकोटीभिर्मस्तकं सप्तकोटिभिः ॥८॥ नेत्रयोरन्तरं तस्य कोटिरेकप्रमाणतः। मुखं कोटिद्वयं तस्य द्विगुणेन च पादयोः ॥९॥ अङ्गुलीनां नखाग्रेषु योजनान्ययुतावधि ॥१०॥ एवं कूर्मप्रमाणं तु कथितं चादियामले। तस्योपरिस्थिता तत्र सप्तद्वीपयुता मही ॥११॥ कूर्माकारं लिखेच्चक्रं सर्वावयवसंयुतम्। पूर्वभागे मुखं तस्य पुच्छं पश्चिममण्डले ॥१२॥ पूर्वापरं लिखेद्वेधं वेधं चोत्तरदक्षिणे। ईशानराक्षसे वेधं वेधमाग्नेयमारुते ॥१३॥ नाभिशीर्षचतुष्पादकुक्षिपुच्छेषु संस्थितम्। तारात्रयांकिते तस्मिन् सौरिं यत्नेन चिन्तयेत् ॥१४॥ अतिवृष्टिरनावृष्टिः शलभा मूषकाः शुकाः। स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥१५॥ कृत्तिका रोहिणी सौम्यं कूर्मनाभिगतं त्रयम्। साकेतं मिथिला चम्पा कौशांबी कौशिकी तथा ॥१६॥ अहिच्छत्रं गया विन्ध्यमन्तर्वेदी च मेखला। कान्यकुब्जं प्रयागश्च मध्यदेशो विनश्यति ॥१७॥ रौद्रं पुनर्वसुः पुष्यं कूर्मस्य शिरसि स्थितम्। सगौडो हस्तिबन्धश्च पञ्चराष्ट्रं च कामरूः ॥१८॥ चेरन्ती च तथा ज्ञेया मगधश्च तथैव च। रेवातटं च नेपालः पूर्वदेशो विनश्यति ॥१९॥

भावार्थ।। अब कूर्मचक्र के सम्बन्ध में कहते हैं। कूर्म का शरीर दश शंख योजन के बराबर होता है। इस कूर्म चक्र के ऊपर ही सातों द्वीप सहित पृथ्वी स्थित है। अन्य श्लोकों में कूर्म के विभिन्न अङ्गों के विस्तार का उल्लेख किया गया है। सभी अवयवों सहित कूर्म चक्र बनायें। कूर्म का मुख पूर्व दिशा में तथा पूँछ पश्चिम दिशा में रखनी चाहिए। इसमें श्लोक में वर्णित नियमानुसार नक्षत्रों को स्थापित करें। कूर्म चक्र द्वारा ग्रानि की स्थिति का विचार कर, सात प्रकार के भयों के संबंध में तथा विभिन्न देशों के शुभाशुभ के विषय में जानकारी प्राप्त की जाती है।। १-१९।।

पूर्वाषाढाऽनलार्द्रा च त्रयाणां सम्मुखो व्यधः। मूले ब्रह्मादितीनां च वेधो गुर्विन्दुव-ज्रिणाम्।।२०।। आश्लेषा च मघा पूर्वा पादे आग्नेय गोचरे। अङ्ग वङ्ग कलिङ्गाश्च पूर्वजाश्चैव कोसलाः।।२१।। डाहली च जयन्ती च तथा चैव सुलंठिका। उडियामं वराडं च अग्निदेशो विनश्यति।।२२।। उत्तरा हस्त चित्रा-श्च दक्षिणां कुक्षिमागताः। दर्दुरं च महेन्द्रं च वनवासं ससिंहलम्।।२३।। तापी भीमरथी लङ्का त्रिकूटं मलय-स्तथा। श्रीपर्वतश्च किष्किन्धा इति नश्यन्ति दक्षिणे।।२४।। स्वाती विशाखा मैत्रं च कूर्मे नैर्ऋति गोचरे। नासिक्यं च सुराष्ट्रं च धृतमालवकं तथा।।२५।। पर्यली च प्रकाशं च भृगुकच्छं च कोंकणम्। खेटापुरं च मोटेरं देशा नश्यन्ति तादृशाः।।२६।। ज्येष्ठा मूलं तथाषाढा पुच्छे कूर्मस्य संस्थिताः। परावर्तं मरु-कच्छमवंती पूर्वमालवम्।।२७।। पारासरं बर्बरं च द्वीपं सौराष्ट्र सैंधवम्। जलस्थाश्च विनश्यंति स्त्री-राज्यं पुच्छ पीडने।।२८।। उत्तराषाढभत्रीणि पादे वायव्य गोचरे। गुर्जराढं यामुनं च मरुदेशं सरस्वती।। २९।। जालंधरं वराटं च बालुकोदधि संयुतम्। मेरुश्रृंगं विनश्यंति ये चान्ये कोण संस्थिताः।।३०।। प्रातभादित्रयं चैव उत्तरां कुक्षिमाश्रितम्। नैपालं कीर काश्मीरं गृंजनं खुरसानकम्।।३१।। माथुरं म्लेच्छ देशश्च खशं केदार मंडलम्। हिमाश्रयाश्च नश्यंति देशा ये चोत्तराश्रिताः।।३२।। रेवती अश्विनी याम्यं

पादे ईशान गोचरे गंगाद्वारं कुरुक्षेत्रं श्रीकंठं हस्तिनापुरम् ॥३३॥ अश्वचक्रैकपादाश्च गजकर्णास्तथैव च। विनश्यंति च ते सर्वे शनावीशान गोचरे ॥३४॥

भावार्थ॥ इन श्लोकों में यह बताया गया है कि कौन से नक्षत्र कूर्मचक्र के किस कोण में होने और वहाँ शनि के होने से कौन सा देश नष्ट होता है ॥२०—३४॥

सौरिः स्वदेशगो यत्र तत्र यत्नेन रक्षयेत्। परदेशस्थिते कुर्याद्विग्रहं पृथिवीपति ॥३५॥ यत्रस्थः पीडयेत्तत्र वेधस्थाने तथैव च। देशनामर्क्षगः सौरिर्भंगदाता न संशयः ॥३६॥ इति पृथ्वी कूर्म चक्रम् ॥

भावार्थ॥ यदि शनि अपने देश में वेध करता हो तो उस देश की प्रयत्नपूर्वक रक्षा करनी चाहिए। परदेश में वेध करता हो तो उस देश पर राजा को चढ़ाई करनी चाहिए। शनि जिस देश के नाम-नक्षत्र को वेध करता है, वह नष्ट हो जाता है॥३५-३६॥

अथ देश कूर्मः। पृथ्वी कूर्मः समाख्यातः कृत्तिकादियमांतकः। देशादिस्वस्वऋक्षादि वक्ष्ये कूर्मचतुष्टयम् ॥३७॥ पूर्ववच्चक्रमालिख्य देशनामर्क्षपूर्वकम्। देशकूर्मो भवेत्तत्र यत्र सौरिस्ततः क्षयः ॥३८॥ इति देश कूर्मः॥ नगरे नागरं धिष्ण्यं कृत्वादौ विलिखेत्ततः। सौरिस्थाने भवेद्दुष्टं वेधस्थाने तथैव च॥३९॥ इति द्वितीय कूर्मः॥ ग्राम कूर्मं समालिख्य ग्रामनामर्क्षपूर्वकम्। पूर्ववत्तत्रगः सौरिर्मध्यादौ भङ्गमादिशेत् ॥४०॥ इति नगर कूर्मचक्रम् ॥ क्षेत्रजे क्षेत्रभान्यादौ कृत्वा कूर्मं यथास्थितम्। सौरिस्थाने विनाशः स्याज्जायते च महद्भयम्॥ ४१॥ इति क्षेत्र कूर्मचक्रम्॥

भावार्थ॥ कृत्तिका से भरणी नक्षत्र पृथ्वी-कूर्म चक्र होता है। नगर कूर्म में नगर के नक्षत्र को लिखना चाहिए। ग्राम के नक्षत्र से ग्राम कूर्म को लिखे। क्षेत्र के नक्षत्र से क्षेत्र कूर्म को

लिखे। जहाँ शनि हो, वहाँ नाश, विघ्न तथा भय समझना चाहिए॥ ३७—४२॥

अथ गृहकूर्मचक्रम्॥ गृहकूर्मं समालिख्य गृहद्वारमुखस्थितम्। गृहनामर्क्षपूर्वं तु कृत्वा वीक्ष्यं शुभाशुभम्॥४२॥ गृहमध्यगतः सौरिः शोकसंतापकारकः। द्वारे विद्युत्प्रदो ज्ञेयः पावके वह्निदायकः॥४३॥ ज्ञेयो मृत्युप्रदो याम्ये राक्षसे राक्षसाद्भयम्। वारुणे शुभदो ज्ञेयो वायव्ये शून्यताप्रदः॥४४॥ अर्थलाभप्रदः सौम्ये शांभवे सर्वसिद्धिदः। सौरिर्बलाधिको दुष्टः स्वल्पवीर्यः शुभावहः॥४५॥ समकालं पीडयेद्यत्र भानु-जः कूर्मपञ्चकम्। तत्र स्थाने महाविघ्नं जायते नात्र संशयः॥४६॥ दुष्टस्थानगते मंदे कर्त्तव्यं तत्र शांति-कम्। यदुक्तं यामले तंत्रे सर्वविघ्नविनाशनम्॥४७॥ कूर्मचक्रं महाचक्रं कथितं चादियामले। त्रिकाल विषयं ज्ञानं पाणिस्थं तेन जायते॥४८॥ इति कूर्मपंचचक्राणि॥

भावार्थ। अब गृहकूर्म-चक्र के विषय में कहते हैं॥ गृह के नाम-नक्षत्र से गृहद्वार में कूर्म के मुख की कल्पना कर चक्र तय्यार करें। इसमें शनि की स्थिति के अनुसार फल का विचार करना चाहिए। शनि दुष्ट स्थान में हो तो विघ्न-नाशक शान्ति-कर्म करना चाहिए॥४३-४८॥

अथ पद्मचक्रम्॥ पद्माकारं लिखेच्चक्रमष्टपत्रं सुशोभनम्। कोष्ठकं नवमं मध्ये पद्मचक्रं प्रजायते॥१॥ कृत्तिकादीनि भान्यत्र त्रीणि त्रीणि यथाक्रमम्। मध्यकोष्ठादिरुद्रान्तं सप्तविंशति विन्यसेत्॥२॥ नवखंडा धरित्रीयं नवभागेषु संस्थिता। यत्र खण्डे स्थितः सौरिः खण्डं तच्च विनश्यति॥३॥ भद्राश्वः किंपुरुषं च हरिवर्षस्तथैव च। मेरुश्च दक्षिणे देशे खण्डायमीरितस्त्रिभिः॥४॥ रम्यं हिरण्मयं चैव कुरुखण्डस्तथैव च। मेरुश्चोत्तरतश्चैव त्रिभिः प्रोक्तादियामले॥५॥ केतुमालश्च यो नाम खण्डो मेरुश्च वारुणे। भरतेषु च विख्यातो पूर्वदिङ्मेरुतः स्थितः॥६॥ इलावृतश्च नामानि खण्डायं मेरुसंस्थितः। नवखण्डमिदं प्रोक्तं कथितं चादियामले॥७॥ इति पद्मचक्रम्॥

भावार्थ॥ अष्टपत्र एवं नवकोष्ठ का सुन्दर पद्म चक्र बनायें। सभी कोष्ठों में कृत्तिका से तीन-तीन नक्षत्र मध्यकोष्ठ से ईशान कोण तक लिखें। जहाँ शनि हो, वहाँ नाश होता है। श्लोक में विभिन्न खण्डों के नामों का उल्लेख किया गया है॥ १-८॥

अथ सप्तद्वीप फणि चक्रम्॥ कृत्तिकादि लिखेच्चक्रं सर्पाकारं फणीश्वरम्। सप्तनाडी समायुक्त तत्र वेधं विलोकयेत्॥१॥ नाड्येकैक समायोगे जम्बूद्वीपादि गण्यते। सप्तद्वीपाः क्रमेणैव तत्र सौरिं विचिन्तयेत्॥२॥ जम्बूद्वीपस्तथा शाकः कुशः क्रौञ्चश्च शाल्मलः। गोमेदः पुष्करद्वीपः पीड्यते सौरिपीड-या॥३॥ इति सप्तद्वीप फणि चक्रम्॥

भावार्थ॥ कृत्तिका से सप्तनाड़ियों युक्त एक सर्पाकार चक्र लिख कर, उसमें वेध को देखे। जहाँ शनि हो, वहाँ पीड़ा होगी। जम्बू, शाक, क्रौंच, शाल्मली, गोमेद, कुश तथा पुष्कर-ये सात द्वीप हैं। शाक द्वीप के बाद कुशद्वीप का स्थान है॥ १-३॥ इति॥

अथ राहु कालानल-चक्रम्॥ अथातः सम्प्रवक्ष्यामि व्याख्याता ब्रह्मयामले। राहुकालानली यात्रा सद्यः प्रत्ययकारिणी॥१॥ ग्रह योगवशाद्यात्रा ज्योतिःशास्त्रेषु भाषिता। या सा शुभेषु कार्येषु फलदा न तु संगरे॥२॥ यस्यच्छायाप्रभावेण छाद्येते शशिभास्करौ। तस्य राहोः प्रभावञ्चव-क्ष्येऽहं रणकर्मणि॥३॥ केचिन्मूर्खा वदन्त्येव ग्रहो राहुरकारणम्। यतो वर्षे दिने लग्ने आधिपत्यं न दृश्यते॥४॥ आधिपत्ये स्थिता ये च वर्षे मासे दिने तथा। ते चाधिकारिणो ज्ञेया राहुराजेति यामले॥५॥

भावार्थ॥ अब राहु कालानल चक्र के विषय में कहते हैं, जिससे यात्रा सिद्धि दायक होती है। राहु ग्रह नहीं है, क्योंकि वर्ष, मास, दिन किसी पर भी उसका आधिपत्य नहीं है। जिस राहु का वर्ष, मास, दिन पर आधिपत्य है वह राजयामल में कहा गया है॥ १-५॥

वेदागमपुराणेषु व्याख्यातो राहुखेचरः । तस्य माहात्म्यमज्ञात्वा मिथ्या जल्पति स्वल्पवित् ॥६॥ दुष्टारिष्टेषु सर्वेषु जातकादिषु गण्यते । सद्यः प्रत्ययदो राहुः स कथं स्यादकारणम् ॥७॥ यः कालरूपो भ्रमति संहारेण महीतले । स वक्रदंष्ट्रया रौद्रो ज्ञेयो राहुर्नसंशयः ॥८॥ ग्रहा ग्रासभयाद्यस्य सृष्टिमार्गे भ्रमन्ति च । तस्य नामान्यहं वक्ष्ये मुखपुच्छक्रमेण च ॥९॥ राहुश्चैव तमः पातः स्वर्भानुः सिंहिकासुतः । दैत्यच्छाया शिरोवक्त्रं ग्रहारिश्च विधुन्तुदः ॥१०॥ पुच्छं केतुः शिखी सर्पो गुदं गुह्यं तदं मतम् । उत्पातो विषगर्भश्च धूम्रकायो ग्रहान्तिमः ॥११॥ ऋक्षाधारगतो राहुः सर्परूपेण संस्थितः । तस्य चक्रं प्रवक्ष्यामि राहुकालानलात्मकम् ॥१२॥ शलाका सप्तकं चक्रमीशादौ कृत्तिकादिकम् । अष्टाविंशति नक्षत्रं साभिजित्सव्यमालिखेत् ॥१३॥ यत्रर्क्षे संस्थितो राहुर्वदनं तद्विनिर्दिशेत् । मुखात्पञ्चदशे ऋक्षे तस्य पुच्छं व्यवस्थितम् ॥१४॥ एकोत्तरशतं संख्या जायन्ते यत्र केतवः । व्याप्नुवन्ति जगत्सर्वं सह सार्कसमत्विषः ॥१५॥ राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश । त्रयोदशैव भोग्यानि मृतपक्षः प्रकीर्तितः ॥१६॥ मृतपक्षे मुखं तस्य गुदं जीवाङ्मध्यमम् । एवमङ्गद्वयो राहुर्ज्ञातव्यः स्वरपारगैः ॥१७॥ जीवपक्षे क्षपानाथे मृतपक्षे रवौ तथा । तस्मिन्काले शुभा यात्रा विपरीता तु हानिदा ॥१८॥ चन्द्रादित्यौ यदा युक्तौ जीवपक्षे व्यवस्थितौ । तत्र क्षेमं जयो लाभो यात्राकाले न संशयः ॥१९॥ मृतपक्षे यदाकाले संस्थितौ शशिभास्करौ । तदा हानिर्भयं भङ्गो मृत्यू राहुः प्रजायते ॥२०॥ जीवपक्षे स्थिते चन्द्रे कार्यं स्यादमृतोपमम् । मृतपक्षे मृतं ज्ञेयं यतश्चन्द्रबलाबलम् ॥२१॥ इति द्विधाङ्गराहुचक्रम् ॥

भावार्थ ॥ राहु की गणना जातक ग्रंथों में अरिष्ट के रूप में की जाती है । राहु के अनेक नाम हैं । इसकी पूँछ को 'केतु' कहते हैं । राहु के चक्र को 'राहुकालानल' कहा जाता है । सप्तशलाका में ईशानकोण से कृत्तिकादि २८ नक्षत्रों को लिखें । जिस नक्षत्र पर राहु हो, वहीं राहु का मुख होता है

मुख से १५वें नक्षत्र पर राहु की पूँछ होती है। केतुओं की संख्या १०१ कही गई है। जिस नक्षत्र पर राहु हो, उससे पीछे के १३ नक्षत्रों की जीवपक्ष संज्ञा होती है। राहु का मुख मृतपक्ष में तथा पूँछ जीवपक्ष में समझनी चाहिए। जिस समय जीवपक्ष के नक्षत्रों में चन्द्रमा हो और मृतपक्ष के नक्षत्रों में सूर्य हो, उस समय यात्रा करने से शुभ फल की प्राप्ति होती है, अन्यथा हानि होती है। यदि यात्रा के समय चन्द्रमा और सूर्य दोनों जीवपक्ष में हों तो लाभ एवं मृतपक्ष में हों तो हानि होती है, क्योंकि सभी कार्यों में चन्द्र बल ही प्रधान माना गया है ॥ ६-२१॥ इति द्वियांगराहुचक्रम् ॥

अथ पञ्चाङ्गराहुः॥ अथ पञ्चाङ्गभेदेन राहुचक्रं वदाम्यहम्। मुखोदरौ गुदं पुच्छं कपालं तस्य पञ्चमम् ॥१॥ राहुः पातस्तमो बिम्बं संहारे वक्रगो ग्रहः। धूम्रपुच्छो ग्रहग्रासः सूर्याङ्गः केतुरुच्यते ॥२॥ मुखाद्यङ्गस्य नामानि फलं चापि वदाम्यहम्। भ्रमणाच्चचन्द्रसूर्यस्य पञ्चाङ्गेषु विधुन्तुदः ॥३॥ यत्रर्क्षसंस्थितो राहुस्तस्य नामानि वच्म्यहम्। गलितं कर्तरी जिह्वा चन्द्रगं वदनं तथा ॥४॥ राहुऋक्षाग्रतो यानि भुक्तभानि त्रयोदश। उदरं सम्पुटं जीवं कामाङ्गं जठरं च हृत् ॥५॥ इति द्वितीयाङ्गम् ॥ उदरादग्रनक्षत्रं पत्पञ्चदशमं मुखात्। गुदमुद्गिलितं गुह्यं केतुश्चन्द्राङ्गकर्तरी ॥६॥ इति तृतीयाङ्गम् ॥ गुदभान्यगतो यानि ऋक्षाणि रससंख्यया। पुच्छं सूर्याङ्गवज्राङ्गं पृष्ठो मृत्युः क्रमेण च ॥७॥ शेषाणि सप्तभान्यत्र मध्यस्थान्यास्य पुच्छयोः। कपालं मस्तकं शीर्षं रुद्राङ्गं भोग्य मण्डलम् ॥८॥ इति पञ्चमाङ्गम्

भावार्थ॥ पाँच अङ्गों के भेद से राहुचक्र इस प्रकार होता है—मुख, उदर, गुद, पुच्छ और कपाल—ये पहले पाँच अंग हैं। चन्द्र-सूर्य के भ्रमण से पाँचों अंगों के नक्षत्रों में राहु जहाँ हो, उसके गलित, कर्त्तरी, जिह्वा, चन्द्रग, वदन नाम हैं। राहु के नक्षत्र से आगे १३ भुक्त नक्षत्रों की उदर, संपुट, जीव, कामांग, जठर तथा हृदय संज्ञा है। गुदनक्षत्र से आगे ६ नक्षत्रों की पुच्छ,

सूर्यांग, वज्रांग, पृष्ठ तथा मृत्यु संज्ञायें हैं। मुख पुच्छ के मध्य में ७ नक्षत्रों को कपाल, मस्तक, शीर्ष, रुद्राङ्ग तथा भोग्य मंडल कहते हैं ॥१-८॥

स्थिररूपस्थितो भानुश्चररूपश्च चन्द्रमाः। क्रमेणैकैक योगानां वक्ष्येऽहं योगपञ्चकम् ॥९॥ राहुवक्त्रे स्थिते सूर्ये चन्द्रे कामाङ्गसंस्थिते। यायिनो विजयस्तत्र स्थायिनो भङ्गमाहवे ॥१०॥ वज्राङ्गसंस्थिते सूर्ये गुदे चन्द्रे समाश्रिते। अग्रयायी जयं युद्धे बलार्द्धं च क्षयं गते ॥११॥ भास्करे गलिताङ्गस्थे चन्द्रे वज्राङ्गसंस्थिते बलक्षयं क्षयं याति किञ्चित्स्थायी जयी रणे ॥१२॥ राहुनक्षत्रगो भानुश्चन्द्रो रुद्राङ्गगो रणे। स्थायिनो विजयो युद्धे यायिनो मृत्युमादिशेत् ॥१३॥ यदा भवेतां चन्द्रार्कौ राहुवक्त्राङ्गसंस्थितौ। सैन्ययोश्च क्षयस्तत्र संदेहो यायिनो जयः ॥१४॥ सविता जीवपक्षे च निशानाथो गुदे स्थितः। निर्दिष्टः स्थायिनो भङ्गो यायिनः सक्षतो जयः ॥१५॥ उदरस्थो यदा भानुः शशाङ्को वज्रमास्थितः। हेलया जीयते स्थायी यायी च म्रियते रणे ॥१६॥ कामाङ्गस्थे दिवानाथे मस्तकस्थे निशाकरे। स्थायिनो विजयस्तत्र यायिनश्च कुलक्षयः ॥१७॥ समुद्रस्थो यदादित्यो जिह्वायां चन्द्रमाः स्थितः। स्थायी च भङ्गमायाति किञ्चिद्यायी जयी रणे ॥१८॥ जठरस्थो यदा भानुश्चन्द्रस्तत्रैव संस्थितः। देवानपि जयेद्यायी किम्पुनः प्रतिमं बलम् ॥१९॥ चन्द्राङ्गस्थो यदादित्यः सूर्याङ्गे चन्द्रमाः स्थितः। समयुद्धं भवेत्तत्र किञ्चिदागन्तुको जयी ॥२०॥ गुदे तीक्ष्णांशुसंयुक्ते कपालस्थोऽथ शीतगुः। यायी च भज्यते वश्यं स्थितः स्थायी जयं विना ॥२१॥ गुदभे संस्थितः सूर्यो राहुभे संस्थितः शशी। यदा महाहवो घोरः किञ्चित्स्थायी जयी भवेत् ॥२२॥ भानुक्षेत्रस्थितो भानू रुद्रक्षेत्रे च चन्द्रमाः। यायिनो मृत्युमाधत्ते जयलाभौ स्थितस्य च ॥२३॥ सूर्याङ्गे च सहस्रांशुर्जिह्वायां शीतगुः स्थितः। यायिनश्च जयं दद्यात्स्थायिनो भङ्गमादिशेत् ॥२४॥ पुच्छषट्के यदादित्यो जीवाङ्गे चन्द्रमाः स्थितः। यायी विजयते तत्र शक्रतुल्योऽपि

वैरिणि ॥२५॥ भास्करे राहु पृष्ठस्थे मृगोङ्कः गुदमाश्रिते । समयुद्धं भवेत्तत्र किञ्चित्स्थायी जयी भवेत् ॥२६॥ सूर्याचन्द्रमसौ यत्र वक्त्राङ्गे समुपस्थितौ । द्वयोस्तु बलयोस्तत्र वधो भवति निश्चितम् ॥२७॥ रुद्राङ्गस्थे दिवानाथे राहुजिह्वाङ्कतः शशी । स्थायिनस्तु जयस्तत्र भङ्गो भवति यायिनः ॥२८॥ कपाल संस्थिते सूर्ये सम्पुटस्थो यदा शशी । यायिना जीयते शत्रुरनायासेन नान्यथा ॥२९॥ मस्तकस्थे दिवानाथे रात्रिनाथे गुदस्थिते यायी च विजयी युद्धं स्थायिनश्च पराजयः ॥३०॥ राहुशीर्षस्थितो भानुर्भानुक्षेत्रे निशाकरः । अन्योन्य विग्रहो घोरो जायेत नरपालयोः ॥३१॥ यदा रुद्राङ्गः संयुक्तौ दिवानाथ निशाकरौ । बलद्वयं तदा याति शीघ्रतो यम मन्दिरम् ॥३२॥ इति पञ्चाङ्गः राहुकालानलम् ॥

भावार्थ ॥ सूर्य स्थिर रूप तथा चन्द्रमा चर रूप है । इन दोनों के योग से पाँच योग होते हैं । राहु के मुख में सूर्य तथा चन्द्रमा कामाङ्ग में हो तो यायी (आक्रामक) की विजय होती है । यदि चन्द्राङ्ग में सूर्य हो तथा तथा चन्द्रमा गुद में हो तो आगे चढ़ाई करने वाला विजयी होता है । सूर्य गिलितांग तथा चन्द्रमा गुद में हो तो दोनों का नाश होता है । राहु नक्षत्र से ७ नक्षत्रों में रुद्राङ्ग में सूर्य-चन्द्र हों तो स्थायी की विजय एवं यायी की मृत्यु होती है । यदि सूर्य-चन्द्र वक्त्राङ्ग में हों तो दोनों सेनाओं का नाश होता है तथा सन्देह से यायी का लाभ होता है । सूर्य जीवपक्ष में तथा चन्द्रमा गुद में हो तो स्थायी की हार होती है तथा यायी चोट खाकर विजयी होता है । संपुट में सूर्य तथा जिह्वा में चन्द्र हो तो स्थायी की हानि तथा यायी की कुछ विजय होती है । इसी भाँति सूर्य चन्द्र की स्थिति के आधार पर, श्लोकों में वर्णित नियमानुसार स्थायी एवं यायी की हार-जीत के बारे में समझना चाहिए । मस्तक में सूर्य तथा गुद में चन्द्रमा हो तो युद्ध में यायी की विजय तथा स्थायी की पराजय होती है । यदि दोनों सूर्य-चन्द्र रुद्राङ्ग में हों तो दोनों सेनाओं का शीघ्र नाश होता है इत्यादि० ॥ २५-३२॥ इति पञ्चाङ्ग राहुचक्रम ॥

अथ षडङ्गराहुः॥ अथ षडङ्गभेदेन राहुचक्रं वदाम्यहम्। मुख हृदुदरं गुह्यं पुच्छं मस्तकमेव च॥१॥ मुखैकं हृदये सप्त षड् ऋक्षाणि तथोदरे ऋक्षैकं गुह्यगं तस्य षट्पुच्छे सप्तमस्तके॥२॥ मुखाद्यङ्गस्य नामानि फलं चापि वदाम्यहम्। यथोत्तर क्रमेणैव चन्द्रार्क भ्रमणेन च॥३॥ यत्रधिष्ण्ये स्थितो राहुस्तस्यधिष्ण्यं प्रकीर्तितम्। गलितं कर्तरी जिह्वा वज्राङ्गं वदनं तथा॥४॥ राहुऋक्षाग्रतः सप्तभानि युक्तानि यानि च। तानि सम्पुट संज्ञानि कामाङ्ग हृदयं मतम्॥५॥ हृदयाग्रे स्थिता याश्चतारका रस संख्यया। कामाङ्गं जठरं जीवं सम्पुटोदर संज्ञकाः॥६॥ उदराच्चैकनक्षत्रं मुखात्पञ्चदशं स्फुटम्। गुदमुदगिलितं गुह्यं केतुश्चन्द्रार्ककर्तरी॥७॥ गुदऋक्षाग्रतो यानि धिष्ण्यानि ऋतु संख्यया। पुच्छं सूर्याङ्ग वज्राङ्गं पृष्ठे मृत्युस्तथैव च॥८॥ शेषाणि सप्तभान्यत्र मध्यस्थान्यास्य पुच्छयोः। कपालं मस्तकं शीर्षं रुद्राङ्गं भोगमण्डलम्। एवं षडङ्गनामानि विज्ञेयानि विचक्षणैः॥९॥ स्थिर रूप स्थितो भानुश्चर रूपस्तु चन्द्रमाः। क्रमेणैकैकशोऽङ्गानां योगषट्कं वदाम्यहम्॥१०॥ राहुवक्त्रे स्थिते सूर्ये चन्द्रे हृदय संस्थिते। यायिनो विजयस्तत्र स्थायिनो भङ्ग आहवे॥११॥ मुखाङ्ग संस्थिते सूर्ये चन्द्रे चोदरगे रणे। अग्रयायी जयेद्युद्धं हेलया नात्र संशयः॥१२॥ भास्करे गिलिताङ्गस्थे चन्द्रे केत्वङ्ग संस्थिते। स्थायी भङ्गं समायाति यायी जयति सक्षतः॥१३॥ राहुऋक्षस्थितो भानुश्चन्द्रे पुच्छाङ्ग संस्थिते। स्थायिनो विजयं युद्धं यायिनो मृत्युमादिशेत्॥१४॥ राहुजिह्वाङ्गते सूर्ये चन्द्रे रुद्राङ्ग संस्थिते। बलावर्तो भवेत्तत्र सैन्ययोरुभयोरपि॥१५॥ राहुऋक्षस्थितो भानुश्चन्द्रस्तत्रैव संस्थितः। न कश्चिज्जयमाप्नोति सैन्ययोरुभयोः क्षयः॥१६॥ इति मुखादि योगषट्कम्॥

भावार्थ॥ अब षडङ्ग राहु के सम्बन्ध में बताया जाता है। मुख, हृदय, उदर, गुदा, पूँछ और मस्तक – इन ६ अङ्गों से षडङ्गराहुचक्र का विचार किया जाता है। प्रत्येक स्थान के नक्षत्रों के नाम तथा सूर्य-चन्द्रादि के प्रभाव को श्लोकानुसार समझ लें॥१-१६॥

हृदयस्थे दिवानाथे जठरस्थे निशाकरे। निर्दिष्टः स्थायिनो मृत्युर्यायी जयति निर्व्रणः ॥१७॥ हृदयस्थो यदा भानुः शशाङ्को गुदमाश्रितः। हेलया जयते यायी स्थायी च म्रियते रणे ॥१८॥ कामाङ्गस्थे दिवानाथे पुच्छषट्के निशाकरे। स्थायिनो विजयस्तत्र यायिनश्च पराजयः ॥१९॥ सम्पुटस्थो यदादित्यो रुद्राङ्के चन्द्रमाः स्थितः। यायी च भङ्गमाप्नोति किञ्चित् स्थायी जयी रणे ॥२०॥ कामाङ्गस्थे दिवानाथे चन्द्रे राहुमुखस्थिते। संग्रामे विजयी स्थायी यायिनो भङ्गमादिशेत् ॥२१॥ हृदयाङ्के यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ। दैत्यानपि जयेद्यायी किम्पुनर्मानवं बलम् ॥२२॥ इति हृदयादि योगषट्कम्॥

भावार्थ॥ यदि सूर्य हृदय के नक्षत्रों में तथा चन्द्रमा पेट के नक्षत्रों में हो तो स्थायी की मृत्यु एवं यायी की विजय होती है। हृदय में सूर्य तथा चन्द्रमा गुद नक्षत्र में हो तो यायी की विजय तथा स्थायी की मृत्यु होगी। कामांग में सूर्य तथा पुच्छ में चन्द्रमा हो तो स्थायी की विजय एवं यायी की पराजय एवं हृदय में सूर्य तथा चन्द्रमा मुख में हो तो भी यही फल होता है। इसी प्रकार अन्य फल भी समझलें॥ १७-२२॥

उदरस्थे दिवानाथे निशानाथे गुदस्थिते समं युद्धं भवेत् तत्र किञ्चिद्यायी जयी रणे॥२३॥ सम्पुटस्थो यदा भानुः पुच्छे भवति चन्द्रमाः। यायि भङ्गो जयी स्थायी तत्र कालेन संशयः॥२४॥ कामाङ्गस्थः सहस्रांशुर्मस्तकस्थो निशाकरः। याता भङ्गमवाप्नोति स्थानवासी जये रणे॥ २५॥ भालादुदरगे यत्र त्रिदशेशो राहुवक्त्रगः। अग्रयायी क्षयी तत्र स्थायी जयति नान्यथा॥ २६॥ स्वर्भानूदरगो भानुर्हृदये तारकाधिपः। अनायासेन संग्रामे यायिनो जयमादिशेत् ॥२७॥ उदराङ्के यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ। तदा सन्धिर्न सन्देहः सैन्ययो रुभयोरपि॥२८॥ इत्युदरादि योगषट्कम्॥

भावार्थ। विभिन्न नक्षत्रों में तथा राहु के विभिन्न अङ्गों में सूर्य चन्द्र की स्थिति का यायी तथा स्थायी पर क्या प्रभाव होता है, इसके ६ योग श्लोकों में स्पष्ट किए गए हैं॥ २३-२८॥

केतुधिष्ण्यस्थिते सूर्ये चन्द्रे पुच्छाङ्कसंस्थिते। यायिभङ्गो जयी स्थायी भाषितं ब्रह्मयामले॥२९॥ गुदे तीक्ष्णांशुसंयुक्ते कपालस्थे निशाकरे। यायी च भज्यते तत्र स्थायी जयति नान्यथा॥ ॥३०॥ गुदर्क्षसंस्थिते सूर्ये राहुऋक्षस्थितः शशी। महाहवो भवेद्‌घोरः किञ्चित् स्थायी जयी रणे॥ ३१॥ भानुरुद्गिलिते ऋक्षे शशभृत्सम्पुटे तदा। यायिनो विजयस्तत्र स्थायिनो भङ्गमादिशेत्॥३२॥ गुह्याङ्कवर्तते भानुर्जठरे रोहिणीपतिः। दग्ध्वा रिपोः सैन्यं याताभ्येति निजालयम्॥३३॥ गुह्ये दिनकरो यत्र तत्र वै यामिनीकरः। समं युद्धं भवेत्तत्र किञ्चिदागन्तुके जयः॥३४॥ इति गुदादि योग षट्कम्॥

भावार्थ॥ इन श्लोकों में गुद नक्षत्रों में सूर्य तथा चन्द्रमा की विभिन्न स्थितियों के प्रभाव का फल कहा गया है॥२९॥३४॥

सूर्याङ्कस्थः सहस्रांशुर्जिह्वायां शीतगुः स्थितः। स्थायिनो विजयं विद्याद् यायिनश्च पराभवः॥३५॥ पुच्छक्षेत्रे स्थिता भानू रुद्रक्षेत्रे तु चन्द्रमाः। यायिनो मृत्युमायान्ति जयलाभौ च स्थायिनः॥३६॥ पुच्छषट्के यदा भानुः कामाङ्के चन्द्रमाः स्थितः। यायी विजयते तत्र शक्रतुल्येऽपि वैरिणि॥३७॥ अंशुमाली भवेद् वज्रे जठरे तु सुधाकरः। आदत्तेऽरिश्रियं जित्वा सर्वान्यायी रणाङ्गणे॥३८॥ भास्करे राहुपुच्छस्थे मृगाङ्के गुदमाश्रिते। समं युद्धं भवेत्तत्र किंचिद्यायी जयी भवेत्॥३९॥ सूर्याचन्द्रमसौ यत्र वज्राङ्क संस्थिता यदा। सौम्ययोरुभयोस्तत्र वधो भवति निश्चितः॥४०॥ इति वज्राङ्क षट्कम्॥

भावार्थ॥ इन श्लोकों में पुच्छ नक्षत्रों में सूर्य तथा चन्द्रमा की विभिन्न स्थितियों के विभिन्न प्रभावों का वर्णन किया गया है। श्लोकों के अर्थ स्पष्ट कर लें॥३५-४०॥

रुद्राङ्कस्थे दिवानाथे रुद्रजिह्वाङ्गगः शशी। स्थायिनस्तु जयस्तत्र भङ्गो भवति यायिनः ॥४१॥ राहुशीर्षस्थिते मित्रे शशाङ्के हृदि संस्थिते। विना युद्धेन गृह्णाति यायी करमरिस्थि- यः ॥४२॥ कपालसंस्थितः सूर्यः सम्मुखस्थो यदा शशी। यायिना जीयते शत्रुः स्थायिनो भङ्गमादिशेत् ॥ ४३॥ कपालसंस्थिते सूर्ये धिष्ण्यनाथे गुदस्थिते। यायिनो विजयो युद्धे स्थायिनस्तु पराजयः ॥४४॥ राहुशीर्षस्थितो भानुः पुच्छक्षेत्रे निशाकरः। अन्योन्यविग्रहं घोरं युद्धं भवति दारुणम् ॥४५॥ दिनेशो राहुरुद्राङ्के चन्द्रस्तत्रैव संस्थितः। विनाशं कोशराष्ट्रस्य यायिनो मृत्युमादिशेत् ॥४६॥ इति कपाल योगाष्टकम् ॥

भावार्थ॥ रुद्रांग में सूर्य तथा राहु-नक्षत्र में चन्द्रमा हो तो स्थायी की विजय एवं यायी की हानि होती है। अन्य श्लोकों में शीर्षस्थान में सूर्य तथा विभिन्न स्थानों में चन्द्रमा के फल का वर्णन किया गया है, उसे समझलें ॥ ४१-४६॥

हृदयादीनि चाङ्गानि जिह्वान्तानि क्रमेण च। दशसंख्यान्यहं वक्ष्ये राहुचक्रस्य मध्यतः ॥१॥ पुष्पितं फलितं चैव निष्फलं झटितं गुदम्। राजसं तामसं वृद्धं मृतं जिह्वा क्रमेण च ॥२॥ पुष्पिते त्रीणि चत्वारि फलिते निष्फले त्रयम्। झटिते त्रीणि ऋक्षाणि गुदे चैकं भवेत्तथा ॥३॥ राजसे त्रीणि ऋक्षाणि तामसे च तथा त्रयम्। वृद्धे चतुष्टयं त्रीणि मृते चैकं तथा मुखे ॥ ४॥ त्रीणि पुष्पितऋक्षाणि क्षेमलाभकराणि च। शत्रुभङ्गं भवेद् युद्धे यात्रा मासेन लाभदा ॥५॥ ततश्चत्वारि धिष्ण्यानि पक्षैकेन फलन्ति च। गजवाजि धनं देशं यायी तु लभते ध्रुवम् ॥६॥ अफलाख्यत्रिधिष्ण्येषु षण्मासे यायिनं प्रति। सन्धिं सेवां तथा देशं यायी प्राप्नोति निश्चितम् ॥७॥ फलं प्राप्नोति वर्षेण झटितैश्च त्रितारकैः। गोधनान्यरिवृन्दानां यायी लुण्ठति च ध्रुवम् ॥ ८॥ गुदऋक्षे जयं लक्ष्मीं

मु० सं० १२१८

भा० टी०

पद्मिनीं प्रियवादिनीम्। रूपयौवनसम्पन्नां स्त्रियं प्राप्नोति निश्चितम्॥९॥ विग्रहस्य भवेद्वृद्धिर्युद्धे भङ्गस्तथैव च। रोगपीडा भवेद्वर्षं राजसाख्ये त्रितारकैः॥१०॥ हस्त्यश्वपुत्रमित्रादि देशकोशपरिग्रहाः। षड्भिर्मासैर्विनश्यंति यायिनस्तामसत्रये॥११॥ तामसोग्रे चतुष्के च तारका वृद्धसंज्ञकाः। सर्वनाशकराः प्रोक्ता मासैकेन न संशयः॥१२॥ ततस्त्रि मृत्युऋक्षाणि राज्ञां मृत्युकराणि च। अर्थनाशश्च युद्धं च पक्षैकेन फलं स्मृतम्॥१३॥ युद्धे भङ्गं महाभीतिर्द्रव्यनाशं कुलक्षयम्। सद्यो मृत्युं लभेद्यायी राहुचक्रे सुनिश्चितम्॥१४॥ इति दशाङ्ग राहुकालानल शुभाशुभ फलम्॥

भावार्थ॥ हृदय से जिह्वा पर्यन्त (१) पुष्पित, (२) फलित, (३) निष्फल, (४) झटित, (५) गुद, (६) राजस, (७) तामस, (८) वृद्ध, (९) मृत और (१०) जिह्वा - इन दस अङ्गों वाला दशाङ्ग राहुचक्र होता है। जीवपक्ष के प्रथम ३ नक्षत्रों की पुष्पित, बाद के चार नक्षत्रों की फलित, उसके बाद तीन नक्षत्रों की निष्फल, उससे आगे के ३ नक्षत्रों की झटित, उसके बाद १ नक्षत्र की गुद, फिर ३ नक्षत्रों की राजस, फिर ३ तामस, फिर ४ नक्षत्रों की वृद्ध, फिर ३ नक्षत्रों की मृत और उसके बाद १ नक्षत्र की मुख संज्ञा है। इस राहुचक्र में युद्ध में भय, महाभय, द्रव्य की हानि, कुल का नाश तथा मृत्यु का फल विचारा जाता है, जो श्लोकों में वर्णित है॥ १-१४॥

युद्धकाले यदा शीघ्रं यात्रायोगो न लभ्यते। उत्पाद्यौ तौ तदा शीघ्रं तत्कालेन्दु दिवाकरौ॥१॥ इष्टनाड्यो हता धिष्ण्यैः षष्टिभागाप्तशेषके। अश्विन्यादीन्दुभुक्तेन फलं तत्कालचन्द्रमाः॥२॥ चन्द्रवत्साधयेदर्कं मृक्षस्थं चेष्टकालिकम्। यतोऽहोरात्रमध्ये तौ विभ्रान्तौ धिष्ण्यमण्डले॥३॥ स्थिरचक्रे मयाप्रोक्तं चन्द्रादित्यफलाफलम्। परचक्रेऽप्यनेनैव प्रकारेण फलं वदेत्॥४॥ सर्वेषु शुभकार्येषु यात्राकाले विशेषतः। सर्वकाले शुभश्चन्द्रो ज्ञेयो हृदि गुदोदरे॥५॥ मुखपुच्छकपाल-

स्थे शशाङ्के राहुवक्त्रगे । बन्धनं हानिमृत्युश्च सर्वकार्येषु जायते ॥६॥ गुदसम्पुटगे चन्द्रे विवाहं नन्द-
न्ति द्वयम् । नैःस्वं विद्वेषवैधव्यं मुखे पुच्छे च मस्तके ॥७॥ पुष्पिते फलिते धिष्ण्ये प्रश्नकाले
शशी शुभः । अफले झटिते मध्ये मृत्युः शेषाङ्के विधौ ॥८॥ ऊर्ध्वं च खेचरं चक्रमधो भूचरमु-
च्यते । उभयोः सन्निपातेन राहुकालानलं मतम् ॥९॥ न लोभैर्न भयैः स्नेहैर्न देयं कार्यकारणैः ।
कालानलमिदं चक्रं गोपनीयं प्रयत्नतः ॥१०॥ चिरकालस्थिते भक्ते सुपरीक्ष्य पुनः पुनः । तस्मिन्न
शिष्ये प्रदातव्यं राहुकालानलात्मकम् ॥११॥ इति राहुकालानलं चक्रम् समाप्तम् ॥

भावार्थ ॥ युद्ध के समय यदि शीघ्र ही यात्रा का योग प्राप्त न हो तात्कालिक
चन्द्र एवं सूर्य का साधन करके योग का विचार करना चाहिए । चन्द्रमा की भाँति ही इष्ट कालिक सूर्य
के नक्षत्र का भी साधन करना चाहिए । शेष बातें श्लोकानुसार समझलें । यह चक्र उसी शिष्य को देना
चाहिए जो बहुत समय तक सेवा कर चुका हो ॥ १-११ ॥

अथ सूर्यकालानलम् ॥ ऊर्ध्वगास्त्रित्रिशूलाग्रास्तिस्रस्तिर्यक् च संस्थिताः ।
द्वे द्वे नाड्यौ स्थिते कोणे शृङ्गयुग्मं तथैकया ॥१॥ मध्ये त्रिशूलदण्डाधो भानुभाच्च भमण्डलम् । साभिजि-
च्च प्रदातव्यं सव्यमार्गेण सर्वदा ॥२॥ नामऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् । अधो गतैस्त्रिनक्ष-
त्रैरुद्वेगो वधबन्धनम् ॥३॥ कोणाष्टके जयो लाभः कुक्षिषट्के तथा पुनः । शृङ्गयुग्मे रुजो भङ्गो
मृत्युः शूलं त्रये स्फुटम् ॥४॥ सूर्यभात् त्रिचतुःपञ्चरससप्ताष्टगोमिते । गतगम्यर्क्षके लाभजयौ
शेषे रुजो मृतिः ॥५॥ विवाहे विग्रहे युद्धे रोगार्ते गमने तथा । सूर्यकालानलं चक्रं ज्ञातव्यञ्च
प्रयत्नतः ॥६॥ रोगे च कुजनक्षत्रं दिनऋक्षं तु युद्धके । प्रयाणे कृत्तिकालेख्यमन्यत्रार्कं प्रदीयते ॥
७॥ इति सूर्यकालानलचक्रं समाप्तम् ॥

भावार्थ॥ ऊपर-नीचे तीन रेखाएं, जिनके अग्रभाग में त्रिशूल हो, खींचें, तथा तीन रेखाएं आड़ी खींचें। दो-दो नक्षत्र कोण में तथा एक-एक नक्षत्र दोनों शृंगों में रक्खें। मध्य त्रिशूल के नीचे से सूर्य के नक्षत्र से अभिजित् सहित २८ नक्षत्रों को क्रमशः रक्खें। जहाँ नाम का नक्षत्र हो, उससे शुभाशुभ का विचार करें। अधः रेखा स्थित ३ नक्षत्रों में उद्वेग, वध और बंधन; कोण के आठ तथा मध्य के ६ नक्षत्रों में विजय और लाभ; दोनों शृंग के नक्षत्रों में रोग और हानि तथा त्रिशूल के ९ नक्षत्रों में नाम का नक्षत्र हो तो मृत्यु होती है। विवाह, विग्रह, युद्ध, रोग तथा यात्रा के संबंध में इस सूर्यकालानल नक्षत्र से विचार करना चाहिए॥ १-५॥ इति सूर्यकालानलचक्रम्॥

अथ चन्द्रकालानलचक्रम्॥ चन्द्रकालानलं चक्रं व्योमाकारं लिखेत्ततः। चतुर्दिक्षु त्रिशूलानि मध्यभिन्नानि कारयेत्॥ १॥ पूर्वत्रिशूलमध्यस्थं दिनऋक्षादि लिख्यते। त्रिशूले च बहिर्मध्ये मध्ये बहिस्त्रिशूलके॥ २॥ नामऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम्। त्रिशूले चक्रबाह्ये च चक्रमध्ये तथैव च॥ ३॥ त्रिशूलेषु भवेन्मृत्युर्मध्यमं बहिरष्टके। लाभक्षेमौ जयः प्रहा चन्द्रगर्भे न संशयः॥ ४॥ वर्जनीयं प्रयत्नेन प्रथमाष्टत्रिपञ्चकम्। ऋक्षं द्वाविंशकं चात्र कालरूपं न संशयः॥ ५॥ दिनभाद् द्वे त्रयं शैलास्त्रितयं च चतुर्दशात्। चन्द्रकालानले काले एकविंशतितस्त्रये॥ ६॥ लाभालाभं सुखं दुःखं जयं चैव पराजयः। चन्द्रकालानले चक्रे ज्ञातं संशयवर्जितम्॥ ७॥ चन्द्राष्टके जयो लाभो मध्यभूपाष्टके मतः। राह्वष्टके भवेद् व्याधिर्मृत्युः केतुचतुष्टये॥ ८॥ इति चन्द्रकालानलम्॥

भावार्थ॥ एक गोलाकार चक्र बनाकर चारों दिशाओं में मध्यभाग को वेधता हुआ त्रिशूल बनाएं। पूर्व दिशा स्थित त्रिशूल के मध्यभाग से दिन-नक्षत्र से त्रिशूल, उसके बाहर मध्य तथा मध्य बाहर एवं त्रिशूल में क्रमशः २८ नक्षत्रों को स्थापित कर, जहाँ नाम का नक्षत्र हो, उससे शुभाशुभ फल का विचार

जलागमनाय॥ ९॥ पूर्वे स्वातित्रये भानौ पश्चिमे पितृपञ्चकम्। अनावृष्टिर्विजानीयाद्विपरीते प्रवर्षणम्॥१०॥ पुरोऽङ्गारमनावृष्टिः पुरो शुक्रप्रवर्षणम्। पुरो देवगुरौ वह्निः पुरो सौम्योथवानिलः॥११॥ ज्येष्ठमासि सितेपक्षे रौद्रादि दश तारकाः। सजला निर्जला ज्ञेया निर्जला सजला भवेत्॥१२॥ इति वृष्टियोगफलम्॥

भावार्थ॥ स्वाति, पूर्वाषाढ़, उत्तराषाढ़, आर्द्रा, रोहिणी तथा उत्तराफाल्गुनी में मंगल के रहने पर वर्षा नहीं होती। चन्द्र शनि पर्वत में हों, सूर्य मंगल हों तो भूलोक वासियों को ऐश्वर्य (श्रेष्ठ वर्षा) की प्राप्ति होती है इत्यादि अन्य बातें श्लोकानुसार समझलें॥१-१२॥

अथ शुक्रोदयास्त फलम्॥ आदित्ये बहुवातं च भूमिजे शत्रुपीडनम्। बुधे चैव तु दुर्भिक्षं शनिवारे महद्भयम्॥१॥ सोमे शुक्रे गुरौ वापि सुभिक्षं जायते ध्रुवम्। उदयं भार्गवे चैत्रे वह्निराज व्यवस्थिते॥२॥ वैशाखे च भवेन्नाशो सर्वनाशं चतुष्पदम्। ज्येष्ठे च सजला पृथ्वी आषाढे जलशोषके॥३॥ श्रावणे कम्पिता भूमौ धनधान्यं नभस्यके॥ आश्विने कार्तिके मार्गे सहितं च प्रवर्तते॥४॥ पौषे चैव तथा माघे राष्ट्रभङ्गं विनिर्दिशेत्। फाल्गुने अल्पवृष्टिश्च उदयास्तभृगोः फलम्॥ इत्युदयास्तफलानि॥

भावार्थ॥ यदि शुक्र का उदय अथवा अस्त रविवार को हो तो अधिक वायु चले, भौमवार को हो तो शत्रु-पीड़ा, बुधवार को दुर्भिक्ष, शनिवार को भय एवं सोम, शुक्र, गुरुवार को हो तो सुभिक्ष होता है। अन्य श्लोकों में शुक्र के मासानुसार उदयास्त का फल कहा है॥ १-५॥ इति॥

अथ मेघद्वाराणि॥ भरण्याद्यष्ट ऋक्षाणि मेघद्वारं प्रकीर्तितम्। प्रभूतं वर्षते मेघः सुभिक्षं जायते ध्रुवम्॥१॥ मघादि पञ्च ऋक्षाणि वायुद्वारं प्रकीर्तितम्। उन्नता चैव मेघाश्च न वर्षन्ति कदाचन॥२॥ स्वात्यादि त्रीणि ऋक्षाणि धर्मद्वारं प्रकीर्तितम्। सुभिक्षं क्षेममारोग्यं बहुवृष्टि

श्च जायेत ॥३॥ ज्येष्ठादि पञ्च ऋक्षाणि रेतद्वारं प्रकीर्तितम्। उन्नता अल्पमेघाश्च अल्पसस्यश्च जायेत ॥४॥ धनिष्ठादि षड्क्षाणि हेमद्वारं प्रकीर्तितम्। सुभिक्षं जायते सर्वं मेघा वर्षन्ति तु ध्रुवम् ॥५॥ इति मेघ द्वाराणि ॥

भावार्थ॥ भरणी से ८ नक्षत्र मेघद्वार संज्ञक होते हैं। इनमें संक्रान्ति हो तो अल्प-धिक वर्षा होती है। मघा से ५ नक्षत्र वायु द्वार संज्ञक हैं, इनमें संक्रान्ति हो तो बड़े बादल उठें, पर बरसें नहीं। स्वाति से ३ नक्षत्र धर्मद्वार संज्ञक हैं, इनमें संक्रान्ति हो तो सुभिक्ष, श्रेष्ठ वर्षा हो। ज्येष्ठा से ६ नक्षत्र रेतद्वार संज्ञक हैं, इनमें संक्रान्ति हो तो अल्प वृष्टि हो। धनिष्ठा से ६ नक्षत्र हेमद्वार संज्ञक हैं, इनमें संक्रान्ति हो तो सुभिक्ष एवं सुवृष्टि होती है॥ १-५॥ इति॥

अथ वृष्टि लक्षणम्॥ अतिवातं च निर्वातमत्युष्णं शीतशीतलम्। अल्पभ्रं च निरभ्रं च षड्विधं मेघ लक्षणम् ॥१॥ यावत् काकोदरा मेघा यावत्सूर्यः शशी समः। यावन्नैर्ऋतिको वायुस्तावद्देवो न वर्षति ॥२॥ चित्रा स्वातिविशाखासु श्रवणेति जलं तथा। तदा स्तुत्यादिकं कृत्वा नदीतीरे उपासनात् ॥३॥ श्रवणे स्वातिपञ्चम्यामस्तं याति दिवाकरः। अवृष्टिर्यदि पर्जन्यो जलसादपि सर्वथा ॥४॥ उदयं सोमजो याति चास्तं याति भृगोः सुतः। श्रावणे चैत्रमासे तु तत्र पातं च दुर्लभम् ॥५॥ उत्तरा पूर्वसस्या च परसस्या च रेवती। अश्विनी सर्वसस्या च यदि वर्षति कृत्तिका ॥६॥ रेवती तोयनाशाय धान्यनाशाय चाश्विनी। भरणी सर्वनाशाय यदि वर्षति कृत्तिका ॥७॥ स्वाती ज्येष्ठा मघाद्री च रोहिण्युत्तरमेव च। भूमिजस्तत्र चायाति ह्यनावृष्टिकरः स्मृतः ॥८॥ इति वृष्टि लक्षणम्॥

भावार्थ॥ अतिवात, निर्वात, अत्युष्ण, शीत शीतल, अल्पभ्र तथा निरभ्र - ये ६ प्रकार के मेघ होते हैं। किस मास में कौनसा नक्षत्र होने पर वृष्टि कम, अधिक अथवा नहीं होती, इसे

श्लोकानुसार समझलें ॥ १-८॥ इति॥

अथ कालदंष्ट्राचक्रम् ॥ नवोर्ध्वगानि धिष्ण्यानि नवतिर्यग्गतानि च, अधोगतानि धिष्ण्यानि नव चैवं विनिर्दिशेत् ॥ १॥ चतुर्नाडीगतो वेधो मध्ये ऋक्षत्रयोज्झितः। सर्पाकारस्य चक्रस्य कालचक्रं प्रजायते ॥२॥ त्रीणि मध्यगतर्क्षाणि तानि कालमुखानि तु। कोणस्थिते च द्वे धिष्ण्ये ते च दंष्ट्राद्वयं मतम् ॥३॥ दिनर्क्षमादितः कृत्वा नामर्क्षं यत्र संस्थितम्। मुखदंष्ट्रागते मृत्युः शुभमन्यत्र संस्थिते ॥४॥ ज्वरिते नष्टदृष्टे च विवाहे विग्रहे रणे। कालदंष्ट्रास्थगे सूर्यपूर्वमर्क्षे तु महद्भयम् ॥५॥ इति कालदंष्ट्राचक्रम् ॥

भावार्थ॥ नौ नक्षत्र ऊपर, नौ नक्षत्र तिरछी पंक्तिमें तथा नौ नक्षत्र अधोगत लिखने से, चार नाडी युक्त सर्पाकार कालदंष्ट्रा चक्र बनता है, जिसमें मध्य के ३ नक्षत्रों को छोड़कर वेध का विचार किया जाताहै। शेष श्लोकानुसार समझलें ॥१-५॥ इति॥

अथ सूर्यफणिचक्रम् ॥ सप्तविंशति भान्यत्र पंक्तियुक्ता क्रमेण च। त्र्यन्तरे त्र्यन्तरे वेधः फणिचक्रं त्रिनाडिकम् ॥१॥ यत्र ऋक्षे स्थितो भानुस्तदादौ गणयेद् बुधः। नाम ऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् ॥२॥ कुर्यान्मृत्युं च रोगं च नाडीवेधगतं नृणाम्। वर्जयेत्सर्वकार्येषु युद्धकाले विशेषतः ॥३॥ निर्वेध ऋक्षमध्यस्थं यस्य नाम प्रजायते। सिध्यन्ति सर्वकार्याणि संग्रामे विजयी भवेत् ॥४॥ इति सूर्यफणिचक्रम् ॥

भावार्थ॥ २७ नक्षत्रों को पंक्तिमें लिखे। तीन तीन नक्षत्रों के बाद नाड़ी वेध होता है। जिस नक्षत्र में सूर्य हो वहाँ से नाम नक्षत्र तक गिनकर शुभाशुभ फलका विचार करना चाहिए। शेष श्लोकानुसार समझलें ॥ १-४॥ इति॥

अथ चन्द्र फणि चक्रम् ॥ सूर्यं फणीश्वरे चक्रे यदुक्तं च शुभाशुभम्। चन्द्रादौ तत्फलं सर्वं ज्ञेयं चन्द्रफणीश्वरे ॥१॥ यदीन्दुर्जन्मनक्षत्रमेकनाड्यां स्थितं भवेत्। तदासौ जायते मृत्युः कालज्ञानेन भाषितम् ॥२॥ इति चन्द्रफणीश्वर चक्रम् ॥

भावार्थ ॥ सूर्य फणि चक्र की भाँति ही इस चक्र में भी शुभाशुभ समझें। यदि चन्द्रमा तथा जन्म नक्षत्र एक ही नाड़ी में हो तो मृत्यु होती है ॥ १-२॥ इति ॥

अथ कवि-चक्रम् ॥ हीन सैन्यः सदा स्थायी यायी सैन्याधिकः सदा। अबलस्य बलो यायं नक्ष्येहं कवि सङ्गरे ॥१॥ प्रयाणे चोत्प्रयाणे निद्रायां मृगयां गते। शोकार्ते व्यसने प्राप्ते हीने सैन्ये विनायके ॥२॥ अष्टधा कविकालस्तु कथितो दुर्बले नृपे। इष्टं युद्धं प्रकुर्वीत जयतीह न संशयः ॥३॥ कविः शिखी पिङ्गलिका कपोत्यर्कात्प्रवेशने। युद्धार्णवात्तु निर्याणे उल्लेखी धाकरी बकी ॥४॥ कवियुद्धे यत्र धिष्ण्ये तदग्रर्क्षे त्रिपावकः। तदा भवेन्मार्गगमो मार्गरोधस्तु पृष्ठके ॥५॥ जीववारेऽर्कभे शिख्यां समयुद्धञ्जायते। स्यात्यां चार्केह्नि पिङ्गल्यां यायिनो वह्निजं भयम् ॥६॥ पुनर्वसौ भौमदिने कपोत्यां यायिनो मृतिः। युद्धार्णवायां मन्देह्नि वह्निभे म्रियते गमी ॥७॥ वैश्वे चन्द्रेह्नि चोल्लेख्यां हयं त्यक्त्वा व्रजेद्गमी। धाकर्यां वारुणेऽर्केह्नि यायिनस्सैन्यपो मृतिः ॥८॥ बक्यां पुष्ये भृगुदिने यायी बन्धमवाप्नुयात्। सदोषामपि निर्दोषा मुल्लेखीं वर्ज्जयेत्कवौ ॥९॥ उदयास्तौ स्वरौ येषां जन्मस्थः सप्तमो विधुः। तद्दिने ते भटाः सर्वे वर्ज्जनीयाः कवौ रणे ॥१०॥ जन्मस्थः सप्तमश्चन्द्रः पञ्चमो नवमोपि वा। पुरस्य पुरनाथस्य तत्काले भङ्गमादिशेत् ॥११॥ चतुरस्रं त्रिनाडीकं कवि चक्रं लिखेद्भुवि। प्रवेशनिर्गमे भानि स्थानधिष्ण्यादि विन्यसेत् ॥१२॥ यदि नामोज्झिते स्थाने शत्रुसैन्यं व्यवस्थितम्। तत्र चक्रं समालेख्यं सेनाधपक्षर्क्षपूर्वकम् ॥१३॥ त्रीणि त्रीणि प्रवेशे च ईशादौ विदिशि क्रमात्। निर्गमे तु चतुष्कं च पूर्वाशादि क्रमेण च ॥१४॥ ईशादौ वाह्यतो

मध्यं मध्याद्वाह्यं तु पूर्वतः । प्रवेशो बाह्यतः कोणे मध्यादिक्षु विपर्ययः ॥१५॥ सौम्याः क्रूरग्रहास्तत्र प्रवेशे निर्गमे तथा । वक्रातिचार गत्वा च ज्ञात्वा कविरणं कुरु ॥१६॥ जीव पक्षे स्थिते चन्द्रे अकुलर्क्षे प्रवेशके । यानं कविरणे प्रोक्तं ज्ञात्वा प्रवेशनिर्गमौ ॥१७॥ उदितास्तस्वरो येषां जन्मऋक्षेन्दुसंभवः । तद्दिने ते भटाः सर्वे वर्जनीयाः कवौ रणे ॥१८॥ क्रूरे शीघ्रे प्रवेशर्क्षे यत्र तत्र विशेद्रणम् । वक्रेस्ते निर्गमे सौम्ये तद्दिग्रणानि-र्गमं कुरु ॥१९॥ प्रवेशर्क्षे प्रवेशं च निर्गमे निर्गमस्तथा । भूबलं पृष्ठतः कृत्वा प्रोक्तः कविरणे जयः॥२०॥ इति कवि चक्रम् ॥



भावार्थ॥ कवि-संग्राम को 'डाक बोलना' कहते हैं। इन श्लोकों में कवि-संग्राम के लिए उपयुक्त समय, शुभग्रह, क्रूरग्रह आदि के ज्ञान का उल्लेख किया गया है। उसे यथावत् समझलें। प्रवेश के नक्षत्र में प्रवेश तथा निर्गम के नक्षत्र में निर्गम, भूमिबल को पीछे कर, कवि-संग्राम में विजय प्राप्त होती है॥ १ - २०॥

अथ खल चक्रम्॥ चतुरस्रं चतुर्द्वारं खलचक्रं लिखेद् बुधः । नन्दादितिथयो न्यस्य पूर्वद्वारक्रमेण च ॥१॥ पूर्वाशादि चतुष्केषु सप्त सप्तक्रमेण च । कृत्तिकादि लिखेन्मध्ये खले भान्यष्टविंशतिः॥२॥ शनि चन्द्रौ कुजः सौम्यो भानु शुक्रौ गुरुस्तमः मध्ये बहिर्गता ज्ञेया अपसव्यदि-शां क्रमात्॥३॥ यद्दिने यद्दिशि स्युस्ते तिथिधिष्ण्यदिनाधिपाः । प्रवेशः खलकद्वारे कर्तव्यस्तद्दिशां सदा ॥४॥ खलकाभ्यन्तरे जालः शनिसूर्येज्यमङ्गलैः । बुधशुक्रेन्दुभिर्बाह्ये स्थायी यायी क्रमाज्जयी॥ ५॥ खलके मध्यनक्षत्रे यो ग्रहो यत्र संस्थितः । तत्र स्थानगते चन्द्रे फलं वक्ष्ये शुभाशुभम्॥६॥ सूर्यस्थानगतः शूरो म्रियते चन्द्रमिश्रिते । भौमस्थाने महाक्रोधी बुधस्थाने महद्भयम्॥७॥ गुरुस्थाने मतिस्थैर्यं भङ्गमायाति भार्गवे। शनिस्थाने क्षते युद्धं राहुस्थे मरणं ध्रुवम् ॥८॥ वक्रस्थाने भवेद्भङ्गः

ग्रीवस्थाने च धावति । समाचारगते स्थायी क्षीणेन्द्रावपगूहति ॥९॥ क्रूरे पृष्ठे जयो युद्धे सौम्ये पृष्ठे पराजयः । क्रूरे च सन्मुखे मृत्युर्जयः सौम्ये ऽग्र संस्थिते ॥१०॥ योधयोः पृष्ठगाः क्रूरा उभयोर्मृत्युकारकाः । सौम्याः सन्धिप्रदा युद्धे मिश्रामिश्रफलप्रदाः ॥११॥ दिननक्षत्रमारभ्य त्रिभिः सुप्तो द्विशेषके । शून्यैकशेषे ग्राह्यस्तु जागर्तीति विनिश्चितम् ॥१२॥ इति खलचक्रं समाप्तम् ॥



भावार्थ॥ चार द्वार से युक्त चतुष्कोण खल चक्र में नन्दा आदि तिथियों को पूर्वोक्त प्रकार से क्रमशः लिखकर, पूर्वादि दिशाओं में क्रमशः कृत्तिकादि सात-सात नक्षत्रों को खल चक्र के मध्य में लिखना चाहिए । दक्षिण क्रम से पूर्वोत्तर, पश्चिम-दक्षिण क्रम से ग्रहों का न्यास कर, जिस दिन जिस दिशा में तिथि-नक्षत्र-दिन के अधिपति हों, उसी दिशा से खल चक्र में प्रवेश कर युद्ध, जय-पराजय, सन्धि आदि के विषय में श्लोकानुसार विचार करना चाहिए ॥ १-१२॥ इति ॥

अथ समचतुरस्रादि कोट चक्राणि ॥ अथातः सम्प्रवक्ष्यामि कोटयुद्धस्य निर्णयम् । स्तोककारैः कुरुते यत्र भूरिसैन्य पराभवम् ॥१॥ यस्यावश्य बलादेव राज्यं कुर्वंति भूतले । विग्रहं चतुराशासु सीमास्थैः शत्रुभिः सह ॥२॥ विषमं दुर्गमं घोरं चक्रं भीरुभयावहम् । कपिशीर्षैस्तु शोभाढ्यं रौद्राट्टालकमण्डितम् ॥३॥ प्रतोली यस्य काला स्यात्परिखा कालरूपिणी । रणतूर्यकृताटोपं टिंकुलीयन्त्र यन्त्रितम् ॥४॥ मुशलैर्मुद्गरैः पाशैः कुन्तखड्गैर्धनुः शरैः । संपूर्णैः सुभटैः शूरैरिति दुर्गं समादिशेत् ॥५॥ दुर्गस्थो दुर्गमः शत्रुरसाध्यो येन सिध्यति । कोटचक्रं प्रवक्ष्यामि विशेषादष्टधा पुनः ॥६॥ प्रथमं मृन्मयं कोटं जलकोटं द्वितीयकम् । तृतीयं ग्रामकोटं च चतुर्थं गिरिगह्वरम् ॥७॥ पंचमं गिरिकोटं च षष्ठं कोटं च डामरम् । सप्तमं वक्रभूमिस्थं विषमाख्यं तथाष्टमम् ॥८॥ मृन्मये साधयेत् खंडिं जलस्थे बंधमोक्षणम् । ग्रामदुर्गे ऽग्निदाहं च प्रवेशं गह्वरे तथा ॥९॥ पर्वते स्थानभेदं च भूबलं

शूपडमेरे । वज्राख्ये कालियोगं च विषमे स्थापितपापिनाम् ॥२०॥ अति दुर्गं कालकर्णं चक्रावर्तं च टिंपुरम् । तलावर्तं च पद्माख्यं मध्यमेदं शमारलकम् ॥११॥ एतन्नामाष्टकं ज्ञेयं वर्गाष्टक क्रमेण च । यस्य वर्गस्य यो भक्ष्य: स वर्गस्तस्य भंगद: ॥१२॥ अ-गरुड: क-मार्जारश्च सिंहश्च ट-श्वानीसुत, । त-सर्पश्च प-आखुश्च य-मृग: श-अजात्मज: ॥१३॥ तार्क्ष्यस्य भक्ष्यो भुजगो बिडालस्य च मूषक: । सिंहस्य भक्ष्यो हरिण: शुनो भक्ष्य स्त्वजात्मज: ॥१४॥ दुर्गवर्गस्य ये भक्ष्या वर्गास्तन्नामजा नरा: । तद्दुर्गे ते रणे त्याज्या न कर्तव्या गढाधिपा: ॥१५॥ स्ववर्गात्पंचमे स्थाने खंडिभंगश्च जायते । अवर्गाद्यष्टकं ज्ञेयं पूर्वाद्यष्टदिशि क्रमात् ॥१६॥ कोटचक्रं लिखेच्चादौ चतुरस्रं त्रिनाडिकम् । कृत्तिकादीनि धिष्ण्यानि साभिजिन्ति न्यसेद् बुध: ॥१७॥ बहि: कोटे च मध्ये च दुर्गमध्ये बहि: पुन: । प्रवेशो निर्गमस्तत्र ज्ञातव्य: स्वरवेदिभि: ॥१८॥ बहिर्दिक्षु भान्यत्र प्राकार तारकाष्टकम् । दुर्गमध्ये तथा चाष्टौ मध्ये स्तंभचतुष्टयम् ॥१९॥ कृत्तिका पुष्य सार्पे च मघा स्वाती विशाखिके । अनुराधाभिजित्कर्णौ धनिष्ठाश्विन्यमाद्वयम् ॥२०॥ आर्द्रा पुनर्वसुर्भाग्यं चित्रा ज्येष्ठोत्तरा तथा । शतभं रेवती चैव प्राकार तारकाष्टकम् ॥२१॥ मृगं रौद्रोत्तराहस्तं मूलमाषाढपूर्वकम् । पूर्वोत्तरा तथा भाद्रा मध्ये ऋक्षाष्टकं त्विदम् ॥२२॥ पूर्वे रौद्रं यमे हस्तं पूर्वाषाढा च वारुणे । उत्तरे उत्तरा भाद्रा एतत्स्तंभ चतुष्टयम् ॥२३॥ कृत्तिकाद्यं मघाद्यं च मैत्राद्यं वासवादिकम् । त्रीणि त्रीणि प्रवेशे च द्वादशान्यानि निर्गमे ॥२४॥ कृत्तिकादिरयं न्यास: सुबोधार्थं प्रदर्शित: । दुर्भाद्गणना चात्र ग्रहैर्वाच्यं तत: फलम् ॥२५॥ दुर्गनामस्थितं वर्णं यद्वर्गादीरितं स्फुटम् । तदीशादि लिखेच्चक्रं क्रमात्स्वरविचक्षणा: ॥२६॥ चतुरस्रं चतुर्दीर्घं त्रिकोणं वृत्तदीर्घकम् । अर्धचन्द्रं तथा ज्ञेयं गोस्तनं धनुराकृति: ॥२७॥ चतुरस्रे यथान्यासो भूमिभाग क्रमेण च । प्रवेशनिर्गमस्तंभास्तथा वृत्तादि सप्तके ॥२८॥ दुर्गभित्तिविभागेन दातव्यं धिष्ण्यमंडलम् । तत्रस्थै: खेचरै: सर्वै: फलं वाच्यं यथोदितम् ॥२९॥ बाह्यभे मध्यभे चैव यत्रस्था: क्रूरखेचरा: ।

तत्रस्थाने कृते यत्ने हन्ति दुर्गं ससैन्यकम् ॥३०॥

भावार्थ॥ कोट-चक्र में पहला कोट मिट्टी से बना, दूसरा जल से, तीसरा ग्राम से, चौथा पर्वत-गुफा से, पाँचवाँ पर्वत से, छठा डामर पहाड़ का गड्ढा, सातवाँ टेढ़ी भूमि तथा आठवाँ ऊँचा-नीचा (विषम) बना होता है। पहले दुर्ग को खण्डन, दूसरे को जल-निष्कासन, तीसरे को अग्नि-दाह, चौथे को प्रवेश, पाँचवें को पत्थर काट कर, छठे को समतल बना कर, सातवें को कलि-युद्ध द्वारा तथा आठवें को स्थायी एवं यायी के अनुसार युद्ध करके विजय किया जाता है। इस चक्र में राशि एवं नक्षत्रों को प्रतिष्ठित करके श्लोकों में वर्णित नियमानुसार दुर्ग-भङ्ग करना चाहिए ॥१-३०॥

बुधशुक्रेन्दुजीवाश्च सदा सौम्यग्रहा मताः। शन्यर्कराहुमाहेयाः केतुः क्रूरग्रहा मताः ॥३१॥ त्रिःप्रकारो ग्रहे चारो वक्रशीघ्रसमो मतः। उच्चनीचसमास्ते च त्रिधा चक्रे भ्रमन्ति च ॥३२॥ ऊर्ध्वं चाधः समास्तिर्यग् दृष्टिभेदश्चतुर्विधः। स्वर्कं मित्रं समं शत्रुः स्थानभेदश्चतुर्विधः ॥३३॥ इज्यो भौमो भृगुर्यत्र बुधः पूर्वादिदिक्स्थितः। कुर्याद् भङ्गं वाऽथ भङ्क्त्वा क्रूरश्चन्द्रसमन्वितः ॥३४॥ सूर्यमुक्ता उदीयन्ते शीघ्रगाश्च द्वितीयगे। समास्तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे ॥३५॥ वक्राः पंचमषष्ठेऽर्के त्वतिवक्राष्टसप्तमे। नवमे दशमे भानौ जायते कुटिला गतिः ॥३६॥ शीघ्रगाश्च भवन्त्येते द्वादशैकादशे तथा। राहुकेतू सदा वक्रौ रवीन्दू शीघ्रगौ सदा ॥३७॥ शीघ्रोऽतिचारगत्या च समश्च सममन्दयोः। वक्रातिवक्रकुटिला वक्रगत्या ग्रहा मताः ॥३८॥ क्रूरोऽतिक्रूरतां याति सौम्यो याति सुसौम्यताम्। वक्रचारे समुत्पन्ने शीघ्रेऽप्येवं विपर्ययः ॥३९॥ मेषो वृषो मृगः कन्या कर्कमीनतुलाः क्रमात्। आदित्यादिग्रहेषूच्चं नीचं यत्तस्य सप्तकम् ॥४०॥ उच्चनीचाच्च यत्तुर्यं समस्थानं तदुच्यते। उच्चस्थं मध्यमं नीचं चक्रे चात्र व्यवस्थितम् ॥४१॥ ऊर्ध्वदृष्टी च भौमार्कौ केकरौ

बुध भार्गवौ । समदृष्टी च जीवेन्दू शनिराहू त्वधोदृशौ ॥४२॥ सुहृदोर्केन्दु सौमेज्या एवं शुक्रश्चभानुजाः
अन्योन्य वैरिणो ह्येते राहोः सर्वे च शत्रवः ॥४३॥ स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे ग्रहे। अर्द्धं समगृ-
-हे ज्ञेयं पादं शत्रुगृहस्थिते ॥४४॥ क्रूरा गर्भे पुरं घ्नन्ति प्राकारे खंडिकारका:। बहिःस्था वेष्टके सैन्यमृ-
त्युदा नात्र संशय: ॥४५॥ क्रूरा गर्भे शुभा बाह्ये गृह्यते निश्चितं पुरम् । सौम्या मध्ये बहि: क्रूरा असा-
-ध्यं दुर्गमुच्यते ॥ ४६ ॥ क्रूरं चतुष्टयं मध्ये प्राकारे सौम्यखेचरा:। भेदाद्भंगो भवेत्तत्र विना युद्धेन
गृह्यते ॥४७॥ प्राकारे संस्थिताः क्रूरा मध्ये सौम्यग्रहा यदि। दुर्गभंगे समुत्पन्ने भंगमायाति वेष्टक:
॥४८॥ मध्यनाडीस्थिताः सौम्या : क्रूरा बहिरवस्थिता:। सैन्यावर्तौ बहि: शत्रोर्विना युद्धेन जायते॥
४९॥ प्राकारे पुरमध्ये च यदा क्रूरा अधिष्ठिताः। सौम्या बाह्ये तदा दुर्गमयत्नेनापि सिध्यति॥५०
सौम्या मध्ये च कोटे च बाह्ये पापग्रहा यदि। देवैर्ब्रह्मादिभिर्दुर्गं गृह्यते न कदाचन ॥५१॥ प्राकारे
बाह्यगा: क्रूरा : सौम्या मध्यगता यदि। युद्धं प्राकारखंडिश्च पुरभंगो न विद्यते ॥५२॥ स्तंभान्तर
गता यस्य ग्रहा: सौम्या: शुभान्विता:। भवेयुस्तस्य कोटस्य न नाशो विद्यते क्वचित् ॥५३॥ यदि
साक्षाद्दहं तत्र युद्धे चात्मगणान्वित: । तथापि न भयं विद्यादिति सत्यं वरानने ॥५४॥ स्तंभान्तरगता
यत्र रविराहुशनैश्चरा:। भूमिपुत्रश्च तस्याशु नाश: कोटस्य निश्चितम् ॥५५॥ मयैव रक्षिते तत्र
युद्धे कोटे न संशय :। तथापि न भवेत्सम्यग् ग्रहदोषाद्वरानने ॥५६॥ सौम्या बाह्ये तथा कोटे
मध्ये क्रूर ग्रहा: स्थिता। स्थायं दुर्गं प्रयच्छन्ति वेष्टकाय गणाधिपा: ॥५७॥ बाह्याभ्यन्तरगा: क्रूरा:
प्राकारे शोभना ग्रहा:। रिपुद्रपं क्षयं याति विना युद्धेन निश्चितम् ॥५८॥ प्राकारस्था ग्रहा: क्रूरा
बहिर्मध्ये शुभा: स्थिता: । समं युद्धं भवेत्तत्र खंडिपातो दिने दिने ॥५९॥ सौम्या: क्रूरास्तथा चाष्टौ
प्राकारे मध्यबाह्यगा: । एकस्था यत्र कुर्वन्ति संग्रामं तत्र दारुणम् ॥ ६०॥ गजाश्वरथभूपाला:

सामन्ता मण्डलेश्वरा. । भटा मर्दं प्रकुर्वन्ति सैन्ययो रुभयोरपि ॥६१॥ चापकुन्तगदापाशखड्गहस्तैर्महाभटैः अभग्नयोर्द्वयो राज्ञोः सैन्यावर्तः प्रजापते ॥६२॥ वाहिन्यो रक्तवाहिन्यो दुस्तराः प्रेतसंकुलाः । वसासृक्पंकलिप्तांगो यन्त्रमन्त्रावगुंठिता : ॥६३॥ गृध्रकाकशिवाश्येनडाकिनी प्रेत संकुला : । वेतालपालभूताढ्याः पिशाचोरगराक्षसाः ॥६४॥ वेताल चपला भूताः पिशाचाः स्वेच्छया वृताः । ईदृशं च महायुद्धं तत्काले जायते ध्रुवम् ॥ न कश्चिद्विजयी युद्धे द्वयं याति यमालयम् ॥६५॥

भावार्थ॥ ग्रहों का शुभाशुभत्व , ग्रहों का संचार , ग्रहों की दृष्टि और गति , पारस्परिक शत्रुता-मित्रता, क्रूरता-सौम्यता आदि विषयों का उल्लेख करते हुए श्लोकों में इन सबके आधार पर दुर्ग पर अधिकार करने से सम्बन्धित फलाफल वर्णन किया है। साथ ही युद्ध के विभिन्न रूपों पर भी प्रकाश डाला है , उसे समझलें ॥३१-६५॥

सम संख्या शुभाः क्रूरा बहिर्मध्ये यदा स्थिताः । तदा सन्धिं विजानीयात् सैन्ययो रुभयोरपि ॥६६॥ क्रूरैर्भंगो जयः सौम्यैर्मिश्रैर्मिश्रफलं मतम् । विचार्य कुरुते युद्धं कोट चक्रे स्वरोदयी॥६७॥ प्रवेशधिष्ण्यगे चन्द्रे जीवपक्षर्क्षसंस्थिते । निशीथे कवियुद्धं तु कर्तव्यं वाह्यसैन्यकैः ॥६८॥ निर्गमर्क्षस्थिते चन्द्रे दुर्गाभ्यन्तरगैर्नृपैः । कर्तव्यं कवियुद्धं च रात्रौ सुप्ते बहिर्जने॥६९॥ प्रवेशनिर्गमाशुक्तौ सैन्ययोरुभयोर्निशि । कवौ कोटे जयो युद्धे विपरीते पराजयः ॥७०॥ गढाधीशाः स्मृताः सौम्या वेष्टाधीशास्तु पापकाः । क्षेत्रयुग्मे स्थिता ये ते ज्ञातव्याश्च प्रयत्नतः ॥७१॥ गढाधीशो भवेच्चन्द्रो वेष्टाधीशस्तु भास्करः । चन्द्र सूर्य विभागेन ज्ञातव्यं च बलाबलम् ॥७२॥ आशाधीशो भवेच्चन्द्रस्ताराधीशश्च भास्करः । चन्द्र सूर्य गतिं ज्ञात्वा पश्चाद्दिशस्तु कारयेत् ॥७३॥ वेष्टाधीशो भवेन्मध्ये गढाधीशस्तु बाह्यतः । स्वयं दुर्गं प्रयच्छंति वेष्टकाय गढाधिपाः ॥७४॥

भूबलं पृष्ठत: कृत्वा पुर: कृत्वा विचक्षणान् । घातपात दिशो हित्वा कविपुद्धं समारभेत् ॥७५॥ क्रूरो वक्री प्रवेशर्क्षे पुरमध्ये स्थितो यदा । तदा कोटविनाशाय कोटस्थो बाह्यभूपते: ॥७६॥

भावार्थ ॥ इनश्लोकों में शुभग्रह एवं पापग्रह के भीतर अथवा बाहर रहने के प्रभाव का वर्णन कियागयाहै । गढ़ के स्वामी तथा कोट आदि की जय-पराजय के सम्बन्ध में लिखे अनुसार समझलें ॥ ६६-७६॥

प्रवेशं बाह्यगे वक्रे सक्रूरे सैन्यविग्रह: । दुर्भिक्षं मृत्युभंगौ च बहि: सैन्यस्य जायते ॥७७॥ निर्गमर्क्षे बहि:स्थे च क्रूरो वक्रं करोति चेत् । प्राकारस्य भवेद्भंग: प्राकारस्थे पुरस्य च ॥७८॥ पुरभे निर्गमे वक्री कथंचित् क्रूर खेचर: । दुर्गं मुक्त्वा तदा काले दुर्गस्थ: प्रपलायते ॥७९॥ यथा क्रूरैस्तथा सौम्यै: फलं ग्राह्यं विपर्ययात् । मिश्रैर्मिश्रं विजानीयात् कोटचक्रे न संशय: ॥८०॥ दुर्गे ग्रहे हिता: पापा वेष्टकानां पुर: स्थिता: । शुभग्रहाश्च बाह्यस्था: शीघ्रा वा वक्रिणोऽथवा ॥८१॥ पुरमध्ये हता: सौम्या: पापा बहिरवस्थिता: । गढाधिपस्य जयदा: फलमार्गान्निसर्गत: ॥८२॥ उभयो विपरीतस्था: पापा: सौम्या: पुरग्रहा: । भंगमृत्युस्तदा काले वर्जयन्ति पुरग्रहम् ॥८३॥ पुरभंगप्रदान् योगान् ज्ञात्वा परपुरं व्रजेत् । यायी स्थायी च तं कालं दानोपायै: समं नयेत् ॥८४॥ उच्चं नीचं समं स्थानं पुरावुक्तं पुनर्ग्रहे । ऊर्ध्वदृष्टिरधोदृष्टि: समतिर्यग्दृशौ पुन: ॥८५॥ दुर्गसैन्यं सदैवोच्चै: प्राकारे मध्यबाह्यकम् । नीचस्थं वेष्टकं सैन्यं ज्ञातव्यं स्वरवेदिभि: ॥८६॥ कोटं कोटाधिपं नीचे निघ्नन्तौ भौमभास्करौ । समस्थौ च पुरं सर्वमुच्चस्थौ निष्फलौ च तौ ॥८७॥ प्राकारे वेष्टकान् घ्नंति उच्चस्थौ राहुसूर्यजौ । प्राकारस्थौ बहि: सैन्यं नीचस्थौ तौ तु निष्फलौ ॥८८॥ समदृष्ट्वा गुरुश्चन्द्र: पश्यत: सर्वत: सदा । तिर्यक्स्थौ बुधशुक्रौ च फलदौ नात्र संशय: ॥८९॥

ऊर्ध्वदृष्टिग्रहे कुर्यात्कुंकुली यन्त्र साधनम् । समे च साधयेत्खड्गं रन्ध्रपातमधो मुखे ॥ ६० ॥ दुर्भिक्षे गते सूर्ये जलशोष: प्रजापते । चन्द्रे भङ्ग: कुजे दाहो बुधे बुद्धिबला नरा: ॥ ६१ ॥ वाक्पतौ दुर्ग मध्यस्थे सुभिक्षं प्रचुरं जलम् । चलचित्तनरा: शुक्रे मृत्युरोगौ शनैश्चरे ॥ ६२ ॥ राहौ मध्यगते दुर्गे भेदभंगौ महद् भयम् । केतौ मध्यगते तत्र विषदानं गदाधिपे ॥ ६३ ॥ इत्युक्तं तु फलं मध्ये एवं बाह्यगतैर्ग्रहै: । उपग्रह समायोगादत्यंतं प्राण संशय: ॥ ६४ ॥ आकारादि स्वरा: पंच पूर्वाद्याशा-चतुष्टये । मध्यांता: सव्यमालिख्य अन्तस्था: खड्गकारका: ॥ ६५ ॥ दुर्गनाम्न: स्वरो यस्मिन् बालो वाऽस्तमितोऽपि वा । तद्दिने प्रारभेद्युद्धं दुर्गं सिध्यति नान्यथा ॥ ६६ ॥ दुर्गस्थो यदि मार्गस्थ: श्रीयुमित्र समन्वित: । उपस्थितेऽपि तत्सर्वं भङ्गं कुर्याच्च वैरिणि ॥ ६७ ॥ एकार्गलविधानं तु कर्तव्यं दुर्गरक्षणे । भंजने यमराजाख्यमित्युक्तं ब्रह्मयामले ॥ ६८ ॥ इति कोटचक्राणि सम्पूर्णानि ॥

भावार्थ ॥ बाहर के प्रवेश नक्षत्रों यदि क्रूरग्रह वक्री हो तो सेना में दुर्भिक्ष, मृत्यु एवं पराजय होती है । पुरमध्य में शुभग्रह तथा बाहर पापग्रह हितकर होते हैं । भौम तथा सूर्य अपनी नीच राशि में होकर बाह्यनाडी में हों तो कोट तथा कोटाधिपति - दोनों का नाश करते हैं । दुर्ग के बाहर के ग्रहों का विचार करना भी आवश्यक है इत्यादि विषयों को श्लोकानुसार समझलें ॥ ७७-६८ ॥

अथ चातुरङ्ग सैन्य विवरणम् ॥ श्रुतं देव मया सर्वं युद्धशास्त्रमनेकधा । सूचनं चातुरंगस्य सविशेषं वद प्रभो ॥ १ ॥ शृणु देवि प्रवक्ष्यामि ब्रह्मयामलनिर्मितम् । सारात्सारतरं सारं रहस्यमिदमद्भुतम् ॥ २ ॥ यस्य विज्ञान मात्रेण दैवज्ञो लभते यश: । जयं ददाति भूपानां यस्यासौ मंडले स्थित: ॥ ३ ॥ पूजितव्य: सभूपालैर्दानमानार्घ पूर्वकम् । ममापि सदृशो देवि ज्ञातव्योऽसौ न चान्यथा ॥ ४ ॥ तेनाचार्येण देवेशि स्वसैन्यार्थेऽष्टशांतिकम् । पौष्टिकं च प्रकर्तव्यं रक्षामृत्युंजयादिकम् ॥ ५ ॥ शलाका

सप्तकं चक्रमीशादौ कृत्तिकादिकम् । साभिजित्सव्यमालिख्य मष्टाविंशति तारकम् ॥६॥ कृत्तिकापित्र्यमैत्राख्यवसुभं च द्विदैवतम् । अहिर्याम्यश्रवो मैत्रं कोणभानि क्रमादिह ॥७॥ मध्ये रौद्रं करस्चापि अहिर्बुध्न्यं ततो भपम् । परस्परं वेधगतं स्तंभर्क्षं सैन्ययोर्द्वयो: ॥८॥ चातुरंगमिदं सैन्यं गजवाजिपदातय: । रथश्च चातुरंगानां राज्यमूलं चतुष्टयम् ॥९॥ अश्वादि सप्तनागानां वाजिनां पुष्य सप्तकम् । स्वात्यादि सप्तपत्तीनां रथानामभिजिदादिकम् ॥१०॥ वह्निभाच्छ्रवणे याम्ये वेधमाहुर्द्विदैवते । पित्र्यात्सार्पेऽच्युते याम्ये मैत्राद्धीशाहियाम्यभे ॥११॥ वासवादच्युते सार्पे द्विदैवे वेधमादिशेत् । एवं वेधेषु सर्वेषु सुधीर्वेधं विचारयेत् ॥१२॥ यस्मिन्धिष्ण्ये ग्रहो योस्ति तत्तस्मिंस्तस्योपग्रह: ॥ रवेर्वह्निक्षय: कालो धिष्ण्ये स्यादष्टमेऽष्टमे ॥ शिवामृत्युकलि: सोमात्सर्पोऽसृक् घोरक: कुजात् ॥१३॥ सौम्याद्वायूल्बणा: क्रोधो जीवात् स्याद्विकच: कच: । ब्रह्माख्य भार्गवो दैत्यो ग्रहाद् ग्रह उपग्रहा: ॥१४॥ शनैश्चराच्चित्रगुप्त: काले केतुस्तथा यम: । राहो: शेषस्तथा शंख: कुलिकश्च तृतीयक: ॥१५॥ क्रमात्केतोस्तु त्रिशिख: शिखी स्याद् धूमकेतुक: । रविर्यायी नृपो ज्ञेय: शनि: स्थानी महीपति: ॥ रवी रथाधिप: सोम: केतुर्द्विरदनायक: ॥१६॥ अश्वाधपक्ष: सुरगुरु: पदातीशो महीसुत: । शनैश्चर स्यंदनेश, सैंहिकेयो गजाधिप: ॥१७॥ भार्गवस्तुरगाधीश: पदात्यधिपतिर्बुध: । रविर्यायी नृपो यस्तु राज्यं गृहीतुमागत: ॥१८॥ चन्द्र: शनि रथाधीशौ राहुकेतू गजाधिपौ । भौमचन्द्रौ पदातीशौ गुरुशक्रौ हयाधिपौ ॥१९॥ चरलग्ने चरांशे च शीघ्रगो बलसंयुत: । सेनां भिनत्त्यसौ खेट: शत्रुमार्गगवेषया ॥२०॥

भावार्थ ॥ विद्वान् आचार्य से अपनी सेना के लिए आठ प्रकार की शान्तियां, पौष्टिक शान्तियां तथा रक्षा मंत्र मृत्युंजय आदि का जप कराना चाहिए । सप्तशलाका चक्र बनाकर उसमें ईशानादि क्रमसे कृत्तिका से आरंभ कर, अभिजित् सहित २८ नक्षत्र सव्य मार्ग से लिखे । अन्य श्लोकों में विभिन्न नक्षत्र एवं ग्रहों के विचार तथा फल का उल्लेख किया गया है ॥ १-२० ॥

वक्रमंदगताः खेटा नरोहंति तदा चमूम् । अस्तगाः शत्रुगेहस्था ग्रहा मृत्युप्रदायकाः
राहुणा त्वभिराक्रांतो रोधितो म्रियते रणे ॥ २१ ॥ स्थिरराशिगताः खेटाः स्थिरांशकगता अपि । स्थापिनो बलमा-
पन्नं स्थिरता जेष्यंति ते रिपून् ॥ २२ ॥ द्विस्वभावगता ये च द्विस्वभावांशके ग्रहाः । समयुद्धं भवेत्तत्र भूमि
तस्य जयं वदेत् ॥ २३ ॥ चरराशौ स्थिरांशस्थौ धावंतं प्रतिधावति । मित्रदृष्टः समुदितो यो ग्रहः स जयी
भवेत् ॥ २४ ॥ स्थिरलग्ने चरांशे यो धावेद्वीरः पराङ्मुखम् । द्विस्वभावे स्थिरांशस्थे स्थिरत्वमवगच्छति ॥ २५ ॥
स्थिरलग्ने द्विमूर्त्यंशे व्यावृत्तस्य भवेन्मृतिः । द्रेष्काणपो धतो मृत्युर्धारयेत्तं गतायुधम् ॥ २६ ॥ मित्रभे मित्र
भावस्थे युक्तदृष्टेंशकोदये । बलवत्युदयेऽप्युच्चे नाथे विजयमादिशेत् ॥ २७ ॥ अत्यरिद्वेषिपुग्दृष्टे नीचस्थेऽस्तं
गते रिपे । विबले मित्रदृग्धीने तस्य स्यात्संगरे वधः ॥ २८ ॥ जन्माभिषेकभे यस्य पापग्रहयुते यदि । तदा
मृत्युमवाप्नोति संगरस्थो महीपतिः ॥ २९ ॥ सुरेज्यो भास्करः सोमश्चांद्रिर्वर्णाधिपाः क्रमात् ॥ ३० ॥ वर्णपे
नीचराशिस्थे ऽस्तंगते शत्रुवीक्षिते । शत्रुगेहस्थिते क्रांते रणे मृत्युमवाप्नुयात् ॥ ३१ ॥ भौमराह्वार्किकेतू
नामेतेषामप्युपग्रहाः । शूद्राद्यन्त्यस्यजातीनामधिपास्ते प्रकीर्तिताः ॥ ३२ ॥ अवनीशो दिनमणिस्तपस्वी
रोहिणीप्रियः । स्वर्णकारस्तु भूपुत्रो ब्राह्मणो रोहिणीभवः ॥ ३३ ॥ श्रेष्ठी गुरुः कविर्वैश्यो वृषलः सूर्यनंद-
नः । सैंहिकेयो निषादश्च ध्वजिः केतुः स्मृतो बुधैः ॥ ३४ ॥ रविजाः क्षत्रवर्णाः स्युः सोमजा वैश्यजा-
तयः । बुधजाता नष्टविप्रा भौमजा वह्निजीविनः ॥ ३५ ॥ बृहस्पत्युद्भवा विप्रा भृगुजाः कविगायकाः ।
शूद्रादयः केतुजाता निषादा राहुसंभवाः । अंत्यजाः शनिसंभूता मृतिं यांत्यधिपेऽस्तगे ॥ ३६ ॥ शीघ्रगाः
द्विचरराशिस्थाः आरोहंत्यग्रतो रिपुम् । शीघ्रगाः स्थिरराशिस्थाः पालयंति निजां चमूम् ॥ ३७ ॥ शनौ नीचगते
पौरा रवौ नीचगतेऽध्वगाः । बंधनं शत्रुसंयुक्ते मृत्युः शत्रुनिरीक्षिते । सप्तमौ शत्रुसंयुक्तौ परयुक्तौ भयं
नहि ॥ ३८ ॥ शीघ्रगा मित्रसंयुक्ताः शुक्रेण लोकिता यदि । तदा संधिं विजानीयात्सेनयोरुभयोरपि ॥ ३९ ॥

मु० सं० ८२३३

भा० टी०

योषिदंशगते चन्द्रे योषिद्ग्रहविलोकिते । योषिल्लग्नगते वापि तदा स्त्री सैन्यपालिका ॥४०॥

भावार्थ॥ जो वक्री अथवा मंदगति होता है, उसकी सेना शत्रु की सेना को ढूंढने नहीं जाती। जो ग्रह अस्त अथवा शत्रुक्षेत्री हो, उसकी सेना मृत्यु को प्राप्त होती है॥ वर्णपति अपनी नीच राशि में, अस्तंगत हो अथवा शत्रु से दृष्ट हो या शत्रुक्षेत्री या शत्रु से आक्रान्त हो तो संग्राम में मृत्यु होती है, इत्यादि श्लोकानुसार समझलें॥ २१-४०॥

ग्रहोश्चोपग्रहो वापि बलवान्शत्रुवीक्षितः। सेनामुखे बली शूरो रेखाबिद्धं हनिष्यति॥ तस्यैव दापयेद्दीक्षां जयाख्यां जयवर्द्धिनीम्॥४१॥ वक्रगे मित्रसंदृष्टे वाममार्गान्निवर्तते। अतिचारे मित्रदृष्टे मध्यमार्गान्निवर्तते॥४२॥ उच्चगो बलसंयुक्तः पुष्टो मित्रैर्विलोकितः। आगच्छेदक्षतो युद्धे निकृत्य परसैनिकम्॥४३॥ अस्तगो दुर्बलः खेटः शत्रुग्रहनिरीक्षितः। तद्गृहांगं समाप्नोति शत्रुबंधनजं भयम्॥४४ भौमादिभिः खड्गघातः शुक्रेज्याद्यैस्तु कुंतजः। सोमसूर्यादिभिर्बाणान्मंदाद्यैर्मुद्गरोद्भवः॥४५॥ राह्वादिभिर्विषभयं केत्वाद्यैर्वचनाद्भयम्। बुधाद्यैः सर्वघातः स्यात्ततश्चोत्पादको बुधैः॥४६॥ गुरुशुक्रौ यत्र संस्थौ तत्र स्थाने पराजयः। तस्मात्तत्र प्रकुर्वीत स्वरक्षैर्दृढरक्षणम्॥४७॥ चक्राण्युक्त्वा सर्वतोभद्रमुख्यान्युर्वीशानां भंगहेतूनि दुर्गे। मुख्यं संख्ये दुर्गमध्येपि सैन्ये, सेनानाथं बच्मि तत्तद्गुणांश्च॥४८॥ योबली स्याद्दृशबलः षड्बली चेन्दुना बली। सेनामुखे स कर्तव्यस्तद्बलादखिलं बलम्॥४९॥ यज्जन्मभे चन्द्रदिवाकरौ स्तो यस्यास्तबालस्थविराः सुराः स्युः। स देवसेनाधिपविक्रमोपि कार्यो न सेनाधिपतिस्तदानीम्॥५०॥ शिशुर्ज्वरी रोगयुतः सुरापो भीरुस्तथा भीरुकुलोद्भवश्च। गुर्वादिदेवद्विजनिन्दको यः कार्यो न सेनाधिपतिः स भूपः॥५१॥ सर्वतोभद्रचक्रादौ यस्य वेधो न विद्यते। तं वीरं कल्पयेत्तत्र चातुरंगे महाहवे॥५२॥ क्षेत्रनामाधिको वीरो रिपुनामाधिकस्तु यः। तस्यैव दापयेद्दीक्षां जयाख्यां जयवर्द्धिनीम्॥५३॥

उच्चभूम्युत्तमं क्षेत्रं समभूमिस्तु मध्यमम् । निम्नभूरधमं क्षेत्रं त्रयस्तत्राधिदेवता: ॥५४॥ उच्चभूम्यधिपो राहु: समभूमेर्दिवाकर: । निम्नभूमीश्वरश्चन्द्रो यथा क्षेत्रं तथा फलम् ॥ ५५॥ आत्मसैन्यस्य देवेशि राहुक्षेत्रं प्रदापयेत् । उभयो: सैन्ययोर्मध्ये यत्र रेखाऽरुणप्रभा । दृश्यते तत्र भंगोस्ति सत्यमेतन्न चान्यथा ॥ ५६॥ बलाकाहंससंकाशं यत्सैन्यमुपलक्षितम् । तद्गच्छति यमस्यास्यं न भूय: संनिवर्तते ॥५७॥ काककोकिलवर्णाभं सैन्यं स्यादति दारुणम् । अदृश्यविग्रहैर्योधै: परसैन्यं निकृत्यते ॥ ५८॥ वीरा भीमोपमा: क्रुद्धा दृश्यन्ते नैव शत्रुभि: । भंगं कृत्वा क्षयं यान्ति सिंहा इव यथा मृगान् ॥ ५९॥ गुर्वार्यद्विजदेवप्रजनरतिर्धर्मानुरक्त: शुचि: । स्वस्वामिन्यनुकूलवर्ति हृदय: शूरोप वंशोद्भव: ॥ शूर: साहसिकोऽथ शास्त्रनिपुण: स्याच्छूरमान्यश्च य: । स नानारणहस्तिनां निगदितो जेता रणे विद्विषाम् ॥ ६०॥

भावार्थ ॥ ग्रह अथवा उपग्रह - दोनों में जो बली शत्रु से दृष्ट हो, उस ग्रह की सेना और उसका सेनानायक ग्रह जिस ग्रह का वेध करता हो, उसकी सेना को नष्ट कर देता है। जिसके जन्मनक्षत्र अथवा जन्म राशि पर चन्द्र-सूर्य हों एवं जिसका बाल, वृद्ध, मृत्यु स्वर अस्त हो, वह यदि इन्द्र ही क्यों न हो, तो भी उसे सेनापति नहीं बनाना चाहिए। अन्य श्लोकों में सेनापति की योग्यता - अयोग्यता तथा सेना एवं सैनिकों के पराक्रम के विषय में बताया गया है, उसे समझ लें ॥ ४२-६० ॥

यायिन: स्थायिन: खेटा वेधरेखागता यदि । समसप्तगता वापि जायते दारुणो रण: ॥ केतुर्यायी सभृगुज: सिंहिकानन्दन: कुज: ॥ ६१॥ परस्परं सप्तमगा: क्रूरसौम्या यथायथ: । वेधरेखागता वापी चन्द्रयोगेति लोहदा: ॥ ६२॥ यद्दिशोऽभिमुखा: सर्वे शीघ्रगा यदि खेचरा: । विग्रहो जायते घोरस्तद्दिशास्थित भूभुजाम् ॥ ६३॥ शीघ्रा: सर्वे ग्रहा राज्ञां विरोध: स्याद् बुधं विना । यदा सर्वे वक्रगतास्तदा युद्धं सुदारुणम् ॥ ६४॥ यायिन: शीघ्रगा: सर्वे स्थायिनो वक्रगा यदि । यायी विजयते तत्राऽन्यथा स्था-

त्स्थायिनो जयः ॥६५॥ उत्तरस्थाः स्थायिनश्चेद्यायिनो दक्षिणस्थिताः। यायिनो विजयस्तत्र व्यस्ताः स्थायि-
जयप्रदाः ॥६६॥ कृत्तिका भरणी स्वाती नागवीथी प्रकीर्तिता। रोहिण्याद्यास्त्रिभास्तिस्रो गजैरावतकर्षभाः॥
६७॥ स्थायिनो मंदगा राज्ञां तदा युद्धं न जायते। पापा वक्राः शुभाः शीघ्रास्तदा युद्धं सुदारुणम् ॥६८॥
मन्दारेज्या वक्रगताः स्थायिनो विजयप्रदाः। शुक्रो वक्रो गुरुः शीघ्रः स्थायिनां मृत्युकारकः॥ विपरीतौ शुक्रगुरू
यायिनां मृत्युकारकौ ॥६९॥ दूरादागच्छतो राज्ञां धिष्ण्ये धिष्ण्ये शतं वदेत्। शतांतरे तु दशकं योजनं तु
दशान्तरे ॥७०॥ शत्रुपक्षस्थितैः सौम्यैर्मार्गरोधकरो भवेत्। एकरेखागतौ शत्रुमृत्युदौ शत्रुतोऽध्वनि ॥७१॥
यत्र रेखागते मित्रे मार्गे मित्रस्य संगमः। मित्राभ्यंतरगे शत्रौ मित्रत्वमुपजायते॥ शत्रुमध्यगते मित्रे शत्रुत्वमु-
-पजायते ॥७२॥ शत्रुवर्णाधिपे नीचे दुर्बलेऽस्तंगतेऽपि वा। तथैव राष्ट्रपे नीचे राष्ट्रभंगो विचक्षणैः ॥७३॥
प्रथमहतः पुरुषश्चेदधोमुखो हंतुरभिमुखः पतति। हंतुः पराजयः स्यादजयः पतिते तथोत्ताने ॥७४॥ छत्रं
ध्वजो नरः शस्त्रं गजो वाजी च यच्छिराः। निपतेत्तत्र यत्सेना विजयं प्राप्नुयाद् ध्रुवम् ॥७५॥ पौरः
प्राक्परतो यायी रविराक्रंद संज्ञकः। मध्याह्ने रात्रिनाथश्च नित्यमाक्रंद संज्ञकः ॥७६॥ इति चातुरङ्गम् ॥

भावार्थ॥ केतु, शुक्र, राहु और भौम ये यायी ग्रह हैं तथा सूर्य, चन्द्र, बुध
गुरु और शनि- ये स्थायी ग्रह हैं। यायी तथा स्थायी ग्रह सप्तशलात्मक चातुरंग चक्र में एक रेखा में हों
अथवा द्वादशार चक्र में समकक्ष हों तो भीषण युद्ध होता है, इत्यादि०। पापग्रह बली हों तथा शुभग्रह शीघ्र
गामी हों तो भी भीषण युद्ध होता है। शत्रु पक्ष स्थित शुभग्रह मार्ग का अवरोध करते हैं। छत्र, पताका,
मनुष्य, शस्त्र, हाथी, घोड़ा, सिर — जिस सेना के सामने गिरे, उसकी विजय होती है। पूर्वाह्न में
सूर्य पौर होता है, अपराह्न में यायी तथा मध्याह्न में आक्रन्द संज्ञक होता है। चन्द्रमा सदैव आक्रन्द
संज्ञक होता है। अन्य बातें श्लोकानुसार समझलें ॥ ६१-७६ ॥ इति ॥

अथ गजचक्रम् ॥ गजाकारं लिखेच्चक्रं सर्वावयवसंयुतम्। अष्टाविंशतिऋक्षाणि देयानि सृष्टिमार्गतः ॥१॥ मुखे शुंडाग्रनेत्रे च कर्णशीर्षांघ्रिपुच्छके। द्विकं द्विकं च दातव्यं पृष्ठोदरे चतुश्चतुः ॥२॥ गजनामादि भान्यादौ वदनाद्गण्यते बुधैः। यत्र ऋक्षे स्थितः सौरिर्ज्ञेयं तत्र शुभाशुभम् ॥३॥ मुखे शुंडाग्रनेत्रे च सौरिभं मस्तकोदरे। युद्धकाले गजे यस्य जयस्तस्य न संशयः ॥४॥ पादे पृष्ठे च पुच्छे च कर्णस्थे च शनैश्चरे। मृत्युर्भंगो रणे तस्य ऐरावतसमो यदि ॥५॥ एतेषु दुष्टगात्रेषु यत्काले संस्थितः शनिः। तत्काले पट्टबन्धश्च वर्जनीयः प्रयत्नतः ॥६॥ पृथिव्या भूषणं मेरुः शर्वर्या भूषणं शशी। नराणां भूषणं लिप्सा सैन्यानां भूषणं गजः ॥७॥ शरतोमरचक्राद्यैर्गजस्कन्धे हता नराः। तत्क्षणात्स्वर्गमायांति तस्मात्स्वर्गोपमा गजाः ॥८॥ नास्ति हस्तिसमो योद्धा नास्ति हस्तिसमः सखा। नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमो रिपुः ॥९॥ इति गजचक्रम् ॥

भावार्थ ॥ हाथी के सभी अवयवों सहित स्वरूप वाला चक्र बना कर, उसमें २८ नक्षत्रों को सृष्टि मार्ग से स्थापित करें। मुख, शुंडाग्र, नेत्र, कान, सिर, चरण तथा पूँछ में दो-दो नक्षत्र एवं पीठ तथा पेट में चार-चार नक्षत्र रक्खें। हाथी के नाम नक्षत्र से मुख से आरंभ दो नक्षत्रों का न्यास करें। जहाँ जिस अंग पर शनि हो, उससे श्लोकानुसार शुभाशुभफल ज्ञात करें ॥ १-९ ॥ इति ॥

अथ अश्वचक्रम् ॥ अश्वाकारं लिखेच्चक्रं अश्विन्यादितारकाः। वदनात्सृष्टिगा देया अष्टाविंशतिसंख्यया ॥१॥ मुखाक्षिकर्णशीर्षेषु पुच्छांघ्रिषु युगं युगम्। पंच पञ्चोदरे पृष्ठे सौरिर्यत्र फलं ततः ॥२॥ मुखाक्ष्युदरशीर्षस्थो यदा सौरिस्तुरंगमे। तदारिभंगमायाति रणेऽन्यत्र पराजयः ॥३॥ कर्णांघ्रिपुच्छपृष्ठस्थो यदा यस्य हयस्य च। विभ्रमं भंगहानी च करोत्यश्वो महाहवे ॥४॥ एतत्स्थानगतः सौरिर्यदा काले हयस्य च। पट्टबंधे गमे युद्धे वर्जयेत्तं हयं नृपः ॥५॥ देशांतर

स्थितास्तस्य रिपवः संति शंकिताः । तुरगापस्य भूपस्य विचरंति मही तले ॥६॥ मेदिनी तस्य तस्याश्वा
इति वाक्यं विपश्चिताम् । सर्वाः श्रियो न राजन्ते विनाऽश्वेन महीभुजाम् ॥७॥ इति अश्व चक्रम् ॥

भावार्थ ॥ घोड़े जैसी आकृति का चक्र बनाकर उसमें घोड़े के नाम के नक्षत्र से मुख से आरंभ कर, क्रमशः २८ नक्षत्रों को इस प्रकार लिखें — मुख, आँख, कान, सिर, पूँछ तथा चारों पाँवों में दो-दो नक्षत्र तथा पीठ एवं पेट में पाँच-पाँच नक्षत्र। जहाँ शनि हो, उससे श्लोकों में कहे अनुसार विचार करना चाहिए ॥१-७॥ इति ॥

अथ युद्ध मुहूर्त विषये अश्वचक्रम् ॥ अश्वानां कर्म कर्तव्यं स्वातौ तिष्ये पुन-र्वसौ । धनिष्ठादित्रये हस्ते रेवती रोहिणीद्वये ॥१॥ सूर्यभात्स्थिर ऋक्षेषु मुखे रामा यशस्तथा । हृदये पञ्च लाभोयं पादे षण्ठश्च भंगदः ॥२॥ पुच्छे वेदा महाहानिः पृष्ठेब्धिर्मृत्युरादिशेत् । अश्वाकारं लिखेच्चक्रं पूर्वग्रंथानुसारतः ॥ स्कंधारभ्यमुखस्यांतं सूर्य भात्साभिजिन्न्यसेत् ॥३॥ पञ्चादशयमैर्वेदबाणादभ्रक्रमेण च । जन्मनक्षत्र मारभ्य गणयेते चन्द्रभे विधिः ॥ नवभिस्तु हरेद्भागं शेषं वाहनमुच्यते ॥४॥
ग्रन्थान्तरे च ॥ अश्वाकारं लिखेच्चक्रं साभिजिद्भानि विन्यसेत् । स्कन्धे च सूर्यभात् पञ्च पृष्ठे च दश भं न्यसेत् ॥५॥ पुच्छे द्वौ दीयते प्राज्ञैश्चतुष्पादे चतुष्टयम् । उदरे पंच ऋक्षाणि मुखे द्वे तुरगस्य च ॥६॥ धनलाभो मुखे सम्यग् वाजिर्नश्यति चोदरे । चरणस्थे रणे भङ्गः पुच्छे पत्नी विनश्यति ॥७॥ अर्थलाभो भवेत्पृष्ठे स्कन्धे स्कन्धपतिर्भवेत् । रासभो रत्नहंता च वाजी रत्नप्रदो भवेत् ॥८॥ हस्ते लक्ष्मी जयो दध्यान्मेले च मरणप्रदः । जम्बुकश्चाशुभं हंति सिंहे वैरं च गर्जनम् ॥९॥ काके वार्ता कलिश्चैव भिरिवहंसौ शुभावहौ ॥१०॥ इति अश्वचक्रम् ॥

भावार्थ ॥ मुहूर्त के सम्बन्ध में अश्वचक्र बनाने की विधि तथा ग्रंथांतर

विधि का उल्लेख इन श्लोकों में किया गया है। युद्ध में जय पराजय के ज्ञान — हेतु इसका उपयोग किया जाता है॥ १-२०॥ इति॥

अथ रथ चक्रम्॥ रथचक्रंलिखेच्चादौ शकटाकृतिशोभनम्। रथाग्रे त्रित्रिशूलं च चतुश्चक्रं त्रिनाडिकम्॥ १॥ भानुभं मध्यशूलाग्रे ततः सव्यगतानि तु। त्रीणि त्रीणि लिखेदेवं सप्तविंशति संख्यया॥२॥ महारथिकभं यत्र तत्र वक्ष्ये शुभाशुभम्। शृंगे मृत्युर्जयं चक्रे रथे संधिस्त्रिदंडके॥३॥ इति रथ चक्रम्॥

भावार्थ॥ रथ के आकार का चक्र बनाकर, उसके अग्रभाग में तीन त्रिशूल बनायें। चार पहिये हों। गाड़ी से बैलों के जोतने के स्थान तक तीन रेखायें हों। सूर्य-नक्षत्र मध्य के शूलाग्र में रखलें, वहाँ से सव्य मार्ग से तीन-तीन नक्षत्र प्रत्येक स्थानों पर रखते हुए, कुल २७ नक्षत्र रखें। जहाँ महारथी का नक्षत्र हो, उससे शुभाशुभ फल कहना चाहिए। शूलाग्र में नक्षत्र हो तो विजय एवं तीन नाड़ियों में हो तो सन्धि होती है॥ १-३॥ इति॥

अथ व्यूह चक्रम्॥ व्यूहचक्रं तथाष्टारं वृत्ताकारं त्रिनाडिकम्। दंडं चतुष्टयं बाह्ये कर्तव्यं च चतुर्दिशि॥ १॥ पूर्वदंडाग्रतो न्यस्य भानुभाद्यं भमण्डलम्। प्रवेशे निर्गमे चैव त्रीणि त्रीणि प्रदक्षिणम्॥ २॥ प्राशि संज्ञाष्टकं मध्ये तद्बाह्ये भानु संज्ञकम्। तृतीये राहु संज्ञं च केतुर्दण्डचतुष्टये॥ ३॥ चन्द्रर्क्षे विजयं लाभः सूर्यांगे मध्यमं फलम्। राहुऋक्षाष्टके विघ्नं मृत्युः केतुचतुष्टये॥ ४॥ एवमुक्ता चतुस्थाने यद्दिने यस्य नामभम्। तद्दिने तत्फलं तस्य सर्वकार्येषु सर्वदा॥ ५॥ इति व्यूह चक्रम्॥

भावार्थ॥ आठ रेखाओं युक्त वृत्ताकार, तीन नाड़ियों से युक्त, चार दण्ड चारों दिशामें बाहर निकले हुए, ऐसा व्यूह चक्र बनाकर श्लोकानुसार फला-फल ज्ञात करें॥ १-५॥

अथ कुंत चक्रम् ॥ कुंताकारं लिखेच्चक्रं मूलदंडशिखान्वितम्। दिनभादि समारभ्य कर्तव्यं नवकत्रयम् ॥१॥ नामभं नवके यत्र तत्र ज्ञेयं शुभाशुभम्। मूले मृत्युर्जयं दंडे शेषर्क्षे तुल्यता रणे ॥२॥ प्रभुभं यत्र नवके तत्र क्रूरैः फलं लभेत्। मूले मृत्युर्जयो दंडे शिखायां संगरो भवेत्। दण्डयुद्धेषु सर्वेषु कुंतमश्चिन्तयेद् बुधः ॥३॥ इति कुंतचक्रम् ॥

भावार्थ ॥ कुन्त अर्थात् भाला के आकार का एक चक्र मूलदंड तथा शिखा युक्त बनायें। दिन के नक्षत्र से नौ-नौ नक्षत्र तीनों स्थानों में कल्पित कर, जिस नवक में नाम का नक्षत्र हो, उससे श्लोकानुसार शुभाशुभ फल ज्ञात करें ॥१-३॥ इति ॥

अथ खड्ग चक्रम् ॥ खड्ग चक्रं लिखेदादौ नवभेद समन्वितम्। योधधिष्ण्यं समारभ्य त्रीणि त्रीणि लिखेद् बुधः ॥१॥ फलं वज्रं तथा मुष्टिः पालिका बंध धारयोः। खड्गं तीक्ष्णं विजानीयान्नवांगानि विभेदतः ॥२॥ फलादौ यत्र बंधान्ता जायंते क्रूरखेचराः। मृत्युर्भंगो भयं युद्धे सौम्यैर्लाभो जयस्तथा ॥३॥ खड्गे धाराढ्ये तीक्ष्णे क्रूरैर्जयति संगरे। सौम्यैर्यत्र भवेद् भङ्गो मिश्रैर्मिश्रफलं ततः ॥४॥ इति खड्गचक्रम् ॥

भावार्थ ॥ नौ अंगों से युक्त खड्ग चक्र बना कर, योद्धा के नक्षत्र से तीन-तीन नक्षत्र लिख कर, श्लोकानुसार जय-पराजय आदि का विचार करना चाहिए ॥१-४॥ इति ॥

अथ छुरिका चक्रम् ॥ यथा खड्गं तथा विद्याच्छुरिकां तत्र निर्णयम्। क्रूर सौम्य विभागेन योधधिष्ण्यानि विन्यसेत् ॥१॥ इति छुरिका चक्रम् ॥

भावार्थ ॥ खड्ग चक्र की भाँति ही छुरिका चक्र द्वारा योद्धा के नक्षत्र से नक्षत्रों का न्यास कर क्रूर-सौम्य विभाग से फलाफल को जानना चाहिए ॥१॥ इति ॥

अथ चापचक्रम् ॥ चापचक्रं समालिख्य गुण बाण समन्वितम् । शशिनक्षत्रतो
भानि त्रीणि त्रीणि समालिखेत् ॥ १ ॥ त्रीणि बाणस्य मूले तु मध्ये मूर्ध्नि क्रमात्तथा । चापस्य मूलमध्योर्ध्वे
त्रीणि त्रीणि तथा पुनः ॥ २ ॥ गुणे तु त्रीणि त्रीण्येव योध्यनक्षत्रतः फलम् । शरमूले भवेन्मृत्युर्मध्ये व्याधिः
फले जयः ॥ ३ ॥ गुणमध्ये भवेद्भंगश्चापमध्ये धनक्षयः । चापोर्ध्वे विजयो ज्ञेयो गुणोर्ध्वे लाभसंयुतः
॥ ४ ॥ चापाधो विग्रहो मृत्युर्गुणाधोपि तथा फलम् । पापग्रहयुते नेष्टं विशेषेण तु नान्यथा ॥ ५ ॥ सौम्य
योगे जयं लाभं चापचक्रे समादिशेत् । शुभपापसमायोगे बलाधिक फलं स्फुटम् ॥ ६ ॥ इति चाप चक्रम् ॥

भावार्थ ॥ गुण (रस्सी या डोरी) तथा बाण से युक्त धनुष (चाप) चक्र बनाकर
उसमें चन्द्र-नक्षत्र अर्थात् दिन-नक्षत्र से तीन-तीन नक्षत्र लिखें । बाण के मूल में ३, मध्य में ३, नोंक पर
३ नक्षत्रों का न्यास करे । दसवें नक्षत्र से ३ नक्षत्र मूल में, ३ मध्य में तथा ३ धनुष के ऊर्ध्वभाग में रक्खें ।
फिर १९ वें नक्षत्र से ३ नक्षत्र मौर्विका के आदि में, ३ मध्य में तथा ३ ऊर्ध्वभाग में रक्खें । तत्पश्चात् योद्धा का
नक्षत्र जिस अङ्ग में हो उसके विषय में श्लोकानुसार फलाफल का विचार करें ॥ १-६ ॥ इति ॥

अथ अग्नि चक्रम् ॥ अथातः सम्प्रवक्ष्यामि अग्नि चक्रं वरानने । होमे च शांतिके
चैव चिन्तनीयं प्रयत्नतः ॥ १ ॥ सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्नि वासः । सौख्याय होमे
शशि युग्मशेषे प्राणार्थनाशौ दिवि भूतले च ॥ २ ॥ त्रीणि त्रीणि भवेदृक्षे सूर्यऋक्षेष्वनुक्रमात् । आदित्ये च
भवेच्छोकं बुधे चैव श्रिया सुखम् ॥ ३ ॥ शुक्रे चैवार्थलाभश्च शनौ पीडा न संशयः । चन्द्रे लाभं विजानी-
याद्भौमे च निधनं भवेत् ॥ ४ ॥ गुरौ चैवार्थलाभश्च राहौ हानिश्च निश्चितम् । केतौ चैव भवेन्मृत्युरग्नि
चक्रं वरानने ॥ ५ ॥ रविभं दीयते पूर्वं गण्यते सृष्टिमार्गतः । शुभाशुभफलं वक्ष्ये अग्निचक्रं सदा बुधैः
॥ ६ ॥ इति अग्नि चक्रम् ॥

भावार्थ। अब शान्ति कर्म के लिए किये जाने वाले हवन में विचारार्थ अग्नि चक्र के विषय में कहा जाता है। वर्तमान तिथि में १ जोड़ कर, वार-संख्या को जोड़ कर उसमें ४का भाग दें। यदि ३ अथवा ० बचे तो अग्नि का वास भूमि में समझना चाहिए। उस दिन हवन करने से सुख प्राप्त होगा। यदि १ या २ शेष बचे तो क्रमश आकाश एवं भूतल में अग्नि का वास समझें। इसमें हवन करने से प्राण तथा धन का नाश होता है। शेष श्लोकानुसार समझलें ॥१-६॥ इति॥

अथ शनि चक्रम्॥ शनि-चक्रं नराकारं लिखित्वा सौरिभादित:। नामऋक्षं भवेद्यत्र ज्ञेयं तत्र शुभाशुभम्॥१॥ मुखैकं दक्षदोस्तुर्यं षट् पादौ पंच हृत्करे। वामे तुर्यं त्रयं शीर्षे नेत्रे गुह्ये द्विकं द्विकम्॥२॥ मुखे हानिर्जयो दक्षे भ्रम: पादे श्रियो हृदि। वामे शीर्षे भयं राज्यं नेत्रे सौख्यं मृतिर्गुदे॥३॥ तुर्याष्टद्वादशे पक्षे यदा विघ्नकर: शनि:। तदा सौख्यं वपु: स्थाने हृच्छीर्षे नेत्रदक्षयो:॥४॥ तृतीयैकादशे षष्ठे यदा सौख्यकर: शनि: तदा विघ्नं शरीरस्थे मुखगुह्यांघ्रिवामदो:॥५॥ यस्य पीडाकर: सौरिस्तस्य चक्रमिदं स्फुटम्। लिखित्वा कृष्णद्रव्येण तैलमध्ये क्षिपेद् बुध:॥६॥ निक्षिप्य भूमिमध्यस्थे कृष्णपुष्पै: प्रपूजयेत्। तुष्टिं याति न सन्देह: पीडां मुक्त्वा शनैश्चर:॥७॥ यथोक्तं यामले तंत्रे सूनो: सूर्यस्य पूजनम्। यथोक्तविधिना सर्वं कर्तव्यं मंत्रपूजनम्॥८॥ जपेत्प्रतिदिनं मंत्रं संख्ययाष्टोत्तरं शतम्। पूजयित्वा विधानेन तत: शान्तिं प्रपद्यति॥९॥ इति शनि चक्रम्॥

भावार्थ॥ मनुष्याकार शनि चक्र बनाकर, उसमें शनि के नक्षत्र से नक्षत्रों को लिखकर, जहाँ नाम का नक्षत्र हो, उससे शुभाशुभ फल का विचार करना चाहिए। एक नक्षत्र मुखमें तथा दायें हाथ में ४, दोनों पाँवों में ३-३, नेत्र में २, गुह्य स्थान में २ नक्षत्र-इस क्रम से लिखकर श्लोकानुसार फलाफल का विचार करना चाहिए॥१-९॥ इति॥

अथ सेवा चक्रम् ॥ सेवाचक्रे सप्तशीर्षे सप्तपृष्ठे तथोदरे। पादयोः सप्त ऋक्षाणि साभिजित्तत्र विन्यसेत् ॥१॥ स्वामिभाद् भृत्यभंगण्यं भृत्यभात् स्वामिभं ततः। निष्फलं पादपृष्ठस्थे सफलं मस्तकोदरे ॥२॥ इति सेवाचक्रम् ॥

भावार्थ ॥ एक नराकार सेवा चक्र बना कर उसमें ७ नक्षत्र मस्तक पर, ७ पीठपर ७ पेट में तथा ७ पाँवों में अभिजित् सहित २८ नक्षत्रों को लिखें। स्वामी के नक्षत्र से सेवक के नाम-नक्षत्र तक गिन कर नक्षत्रों पर विचार करे। यदि पाँव तथा पीठ में नक्षत्र पड़े तो निष्फल एवं मस्तक तथा पेट में पड़े तो सफल होता है ॥१-२॥ इति॥

अथ घात नर चक्रम् ॥ नरचक्रं नराकारमष्टावयव संयुतम्। येन विज्ञान मात्रेण क्रियते घात निर्णयः ॥१॥ मुखैकं मस्तके त्रीणि हस्ते पादे चतुश्चतुः। हृदि पञ्च त्रिकं कण्ठे साभिजिद्भानि विन्यसेत् ॥२॥ कृत्वा योग्यभमादौ तु मुखे मस्तक वामके। हस्त पादोदर ग्रीवा दक्ष हस्तांघ्रि गण्यते॥३॥ यत्रांगे भानुभौमार्कि राहवो धिष्ण्य संस्थिताः। तत्रं घातं विजानीयाच्चन्द्रयोगे विशेषतः ॥४॥ ग्रह भुक्ति प्रमाणेन नवांशक क्रमेण च। प्रहारो जायते तत्र वक्रे द्विगुण संख्यया ॥५॥ निजभे वर्द्धघातं च पादोनं मित्रभे ग्रहे। उदासीने भवेत्सर्वं द्विगुणं शत्रुगे ग्रहे ॥६॥ द्विर्द्वादशो भानुचन्द्रौ त्रिरुद्रे शनि मंगलौ। शुक्रेन्दुजे वेद दृशौ पञ्चांके राहु वाक्पती ॥७॥ षडष्टके केतु शुक्रौ सप्तार्घे कंठतीक्ष्णगू। तृराशौ लग्नतश्चैते ग्रहा घ्नंति रिपुं महत् ॥८॥ नाभिश्रोत्र मुखे चन्द्रः पृष्ठ कोष्ठे बुधस्तनौ। भौमार्कौ दंडहृद्गंधे गुरूदरे गुदे भृगुः ॥९॥ बाहु कर्णे तथास्ये च स्वर्भानुः स्कन्ध कर्णयोः। कालः करतले यस्य बाहु कक्षांधराभवः ॥१०॥ केतुर्दंडे त्रिधाहंति मुखे शीर्षोदरे रविः। क्षिति वर्णैर्युता वेधा ग्रहा घातस्य लक्षणम् ॥११॥ शत्रुभे मित्रघातेपि रिपुणा तस्य होरया। क्रियतेऽरिः स्वके लग्ने शत्रु

घातेपि हन्यते ॥१२॥ एको ऽप्यनेकघातांश्च करोति भूबलोज्झितः। भूबलस्थे भटे खेटाः स्थिता घातं न कुर्वते ॥१३॥ यत्र यत्र स्थितो घातो यत्र यत्र स्थितो न हि। तत्फलं कथयिष्यामि गृह-भूमिबलात्पुनः ॥१४॥ क्रूराघातं न कुर्वन्ति दक्षपृष्ठगता रणे। संमुखा वामगा एते योधांगे क्षत-कारकाः ॥१५॥ दक्षिणांगगताः क्रूराः सौम्या वामांगसंस्थिताः। शिरश्छेदे समुत्पन्ने भटो धावति सम्मुखम् ॥१६॥ यस्य वामांगगाः क्रूराः सौम्या यस्य च दक्षिणे। तस्य भंगो रणे नूनं यदि शूरो महाभटः ॥१७॥ इति घात नर चक्रम् ॥

भावार्थ॥ आठ अवयवों से युक्त नर चक्र बनाकर मुखमें १, मस्तकपर ३, दोनों हाथ तथा दोनों पाँवों में चार-चार, हृदय में ५ स्कंध कंठ में ३, नक्षत्र अभिजित् सहित लिखे। योधा के नाम नक्षत्र से मुखमें १, मस्तक में ३, बाँये हाथ में ४, बाँये पाँव में ४, पेट में ५, कंठ में ३, दाँये पाँव में ४ तथा दाँये हाथ में ४ नक्षत्र रक्खें। जिस अङ्ग के नक्षत्र में सूर्य, भौम, शनि, एवं राहु स्थित हों, उस अंग में योद्धा को घात होगा। यदि उक्त ग्रहों के साथ चन्द्रमा भी हो तो विशेष घात होगा। अन्य बातें श्लोकानुसार समझलें। इस चक्र द्वारा घात संबंधी विचार किया जाता है। यह नराकार शनि चक्र योद्धाओं के घात के संबंध में प्रयुक्त किया जाना चाहिए ॥१-१७॥ इति॥

अथ डिंभ चक्रम् ॥ डिंभ चक्रे न्यसेद्भानि भानुभाद्द्वित्रि मस्तके। मुखे त्रीणि द्वयं स्कन्धे एकैकं बाहुहस्तयोः ॥१॥ पंच हृन्नाभि गुह्येषु एकैकं षट् च जानुनि। चरणा-भ्यां तथैकैकं जन्मभं यत्र तत्फलम् ॥२॥ शीर्षस्थे छत्रलाभश्च वक्त्रे मिष्टान्न भोजनम्। स्कंधे धनी च बाहुभ्यां स्थानभ्रष्टो भवेन्नरः ॥३॥ पाणिभ्यां तस्करो लक्ष्मी हृद्यल्पायुश्च नाभिभे। गुह्ये कामी श्रमो जानौ स्त्रीकजीवी च पादयोः ॥ इति डिम्भ चक्रम् ॥

भावार्थ॥ डिंभनक्षत्र भी नराकार बनाया जाता है। सूर्य के नक्षत्र से इन नक्षत्र मस्तक पर, ३ मुख में, २ कंधे पर, एक-एक भुजा तथा हाथ में, ५ हृदय में, एक-एक नाभि तथा गुह्य स्थान में, ६ जांघों में तथा एक-एक चरणों में स्थापित करें। जहाँ जन्म नक्षत्र हो, वहाँ से फल कहना चाहिए। शेष श्लोकानुसार समझलें ॥१-४॥ इति॥

अथ पक्षि चक्रम्॥ चञ्चुमस्तक कण्ठेषु हृदयोदर पत्सु च। पक्षयोश्च त्रिकं चैव शशिभाद्विन्यसेद् बुध: ॥१॥ चञ्चुस्थे नामभे मृत्यु: शीर्षे कण्ठोदरे हृदि। विजय: क्षेमलाभश्च भंगदं पादपक्षयो: ॥२॥ इति पक्षिचक्रम्॥

भावार्थ॥ चन्द्रमा के नक्षत्र से, पक्षी की आकृति वाले चक्र की चोंच, मस्तक, कंठ, हृदय, पेट, पाँव तथा दोनों पंखों पर तीन-तीन नक्षत्र लिखें। यदि चोंच में नाम का नक्षत्र हो तो मृत्यु; शिर, कंठ, पेट व हृदय में हो तो विजय और कुशल-लाभ एवं पाँव तथा पंख में हो तो हानि होती है ॥१-२॥ इति॥

अथ वर्ग चक्रम्॥ अगरुड: कमार्जारश्च सिंहश्च: शुनी सुत:। त: सर्पो मूषक: पश्च यो मृग: शास्त्वजात्मज: ॥१॥ वसु भूत रसा वेदा मुनि चन्द्राग्नि बाहव:। पूर्वादि क्रमतो ज्ञेया वर्गो-परि दिगष्टके ॥२॥ नाम्नि वर्गादिवर्णानामङ्का: कार्या: पृथक् पृथक्। पिण्डिता वसुभिर्भक्ता शेषमायोध्वजा-दिक: ॥३॥ शेषसंख्या ध्वजो धूम: सिंहश्वावृषरासभा:। गजध्वांक्षौ क्रमेणैव आया अष्टौ भवन्ति ते ॥४॥ ध्वांक्षश्वरासभवृषगजसिंहध्वजानला:। यथोत्तर बला सर्वे ज्ञातव्या: स्वरपारगै: ॥५॥ भूमौ योधे पुरे देशे मित्रनारी गृहेषु च। आयाधिके भवेल्लाभो न लाभो बलवर्जिते ॥६॥ इति वर्गचक्रम्॥

भावार्थ॥ नौ कोष्ठकों वाला गरुड़ चक्र तैयार करके, उसके द्वारा श्लोकानुसार लाभ-हानि का विचार करना चाहिए॥ १-६॥ इति।

अथ आय चक्रम् ॥ ध्वजो धूमोथ सिंहः श्वा सौरभेयः खरो गजः। ध्वांक्षश्चेति क्रमेणैव आया अष्टौ दिगष्टके ॥१॥ प्रतिपदाधुदीयन्ते तिथि मुक्ति प्रमाणतः। अहोरात्रे पुनः सर्वे यामभुक्त्या भ्रमन्ति च ॥२॥ आया वर्गाष्टके ज्ञेया दिगष्टक क्रमेण च। स्वोदये मृत्युदं ज्ञेयं सर्वकार्येषु सर्वदा ॥३॥ इति आय चक्रम् ॥

भावार्थ॥ नौ कोष्ठकों वाला आय चक्र बना कर, श्लोकानुसार, जिस दिशा में अपना वर्ग और आय उदित हो, उस दिशा में अपने कार्यों को नहीं करना चाहिए ॥१-३॥ इति॥

अथ ग्राम चक्रम् ॥ ग्राम नक्षत्र मारभ्य कर्तुर्नक्षत्रं गण्यते। शिरः पञ्चार्थलाभं च मुखे त्रीण्यर्थनाशनम् ॥१॥ बाणा हृदि धनं धान्यं द्वौ पादौ बद्धदरिद्रता। द्वौ गुह्ये भयं पीडा नाभौ चत्वारि सम्पदम् ॥२॥ पृष्ठैकं प्राणसन्देहो हस्ते चैकैकलाभदम्। जन्मराशिस्थितो ग्राम स्त्रिषट् सप्तमगोपि वा ॥३॥ सिद्धार्थाश्च विनश्यन्ति आपत्यं च दिने दिने ॥४॥ चतुर्थश्चाष्टमो यश्च द्वितीयो वा यदा भवेत्। तत्र चोत्पद्यते द्रव्यं यत्न चैवं विनिर्दिशेत् ॥५॥ पञ्चमो नवमो ग्रामो द्वादशैकादशो दशे। महालाभो भवेत्तस्य प्रभवेच्च चिरायुषम् ॥६॥ अन्यच्च॥ पञ्चमो नवमो ग्रामो दशमैकादशास्थतः। द्वितीये वसते नित्यं धनधान्यसमन्वितम् ॥७॥ चतुर्थश्चाष्टमो ग्रामो द्वादशेपि यदा भवेत्। तत्र चोपार्जितं द्रव्यं तत्रैवापि विनश्यति ॥८॥ इति ग्राम-चक्रम् ॥

भावार्थ॥ ग्राम के नक्षत्र से गृहकर्त्ता के नक्षत्र तक गिन कर क्रम से ५ नक्षत्र सिर में स्थापित करे। इसे धन लाभ। फिर ३ मुख में। इससे धन-नाश। फिर ५ हृदय में इससे धन-धान्य का लाभ। फिर दोनों पाँवों में २ नक्षत्र। इससे दारिद्रता। फिर दो नक्षत्र गुह्य स्थान में तथा अन्य नक्षत्र श्लोकों में वर्णित स्थानों में स्थापित कर, तदनुसार ही फल समझलें ॥१-८॥

अथ पट्ट-चक्रम्॥ अथातः सम्प्रवक्ष्यामि विवाहे प्रोधपेद्बुधः। रवितारादि
गण्यन्ते चन्द्रभादि च यो न्यसेत्॥१॥ त्रीणि त्रीणि क्रमेणैव फलं तस्य शुभाशुभम्। मध्येमृत्युस्त-
-था लक्ष्मीरंघ्रिर्विघ्नं तथैव च॥२॥ सौभाग्यं विधवा वन्ध्या धनं पुत्रः क्रमेण च॥ त्रिऋक्षमर्का-
दि कुलक्षयं च पूर्वार्धि लक्ष्मीर्मृति दुर्बलत्वम्। सौभाग्य वन्ध्या विधवा च नारी पुत्र प्रसूतिर्धन पट्टकाले
॥३॥ इति विवाह पट्ट चक्रम्॥

भावार्थ॥ विवाह पट्टचक्रमें सूर्य-नक्षत्र से चन्द्रनक्षत्र तक गिनें। क्रमशः
तीन-तीन नक्षत्रों का शुभ-अशुभ फल होता है। शेष श्लोकानुसार समझलें॥ १-३॥इति॥

अथ तिरंचि-चक्रम्॥ अथातः सम्प्रवक्ष्यामि सद्यः प्रत्ययकारकम्। तिरंचि
नाम विख्यातं यत्सुरैरपि दुर्लभम्॥१॥ कृत्तिका चोत्तराफाल्गुन्युत्तराषाढ पूर्वकम्। पंक्तियुक्त्या लिखेद्
भानि क्रमेण नवकत्रये॥२॥ वेधोपि कणगस्तत्र कर्तव्यो नवकत्रये। क्रूरसौम्यग्रहैर्विद्धं ह्येयं तस्य
शुभाशुभम्॥३॥ जन्म सम्पद्विपत्क्षेम प्रत्यरिः साधको वधः। मैत्रादि मैत्रगास्तारा नवभेदा भवन्ति
च॥४॥ जन्मत्रयस्य वेधेन मृत्युः क्रूरग्रहेण च। जयं लाभं शुभैस्तत्र मिश्रैर्मिश्रफलं विदुः॥
५॥ जन्मत्रये स्थितः सौरिः क्षेमभे राहुभूमिजौ। मित्रातिमित्रगे सूर्ये जायते बधबन्धनम्॥६॥
जन्मत्रये यदा जीवः क्षेमभे बुध भार्गवौ। मित्रातिमित्रगे चन्द्रे जयं लाभं सुखानि च॥७॥ त्रि
पञ्चसप्त तारासु रोगोत्पत्तिर्यदा तदा। चिररोगो मृतिस्तासु क्रूरविद्धासु जायते॥८॥इति विरंचिचक्रम्॥

भावार्थ॥ अब विरंचि चक्र के विषय में कहा जाता है। कृत्तिका, उत्तराफाल्गुनी
तथा उत्तराषाढ़ को एक पंक्ति में लिखें। फिर क्रमशः एक-एक पंक्ति में नौ-नौ नक्षत्र लिखकर, तीनों
नवकों में तिरछे-तिरछे वेधका श्लोकानुसार विचार कर, शुभाशुभ फल ज्ञात करलें॥ १-८॥इति॥

अथ भास्वच्चक्रम् ॥ रेखात्रयं त्रिशूलाभं तिर्यग्रेखा समन्वितम् । एकैका कोणगा तत्र मध्यायो भानुभादितः ॥ १॥ लिखेत्सव्यक्रमेणैव चक्रे भास्वति तारकाः । अधस्त्रये भवेन्मृत्युश्चतुर्भिः कोणगैः शुभम् ॥ द्वादशा मध्यमाः प्रोक्ता ऊर्ध्वगा भस्मकारकाः ॥ २॥ इति भास्वच्चक्रम् ॥

भावार्थ ॥ त्रिशूल की भाँति तीन रेखायें खड़ी तथा तीन तिरछी लिखकर, उसमें सूर्य-नक्षत्र से एक-एक नक्षत्र कोण में तथा शेष मध्य एवं ऊपर-नीचे स्थापित करें। नीचे वाले नक्षत्र में मृत्यु, कोणवाले में शुभ, ऊपर वाले में मध्यम तथा और ऊपर वाले में अनिष्ट फल समझें ॥ १-२॥

अथ श्येनचक्रम् ॥ श्येनचक्रं समालिख्य पक्षिरूपं सुशोभनम् । चंचवग्रे भानुभं कृत्वा अष्टाविंशति विन्यसेत् ॥ १॥ ऋक्षैकं चञ्चुकोटिस्थं शीर्षे ग्रीवे त्रिकं त्रिकम् । पादपृष्ठे चतुष्कं च उदरे नव भानि च ॥ २॥ नामऋक्षं स्थितं यस्य चंचवग्रे वधबन्धनम् । लाभो हृच्छीर्षग्रीवासु विरुद्धं पादपृष्ठयोः ॥ ३॥ इति श्येनचक्रम् ॥

भावार्थ ॥ पक्षी के आकार का श्येनचक्र बनाकर, सूर्य-नक्षत्र को चोंच के आगे लिखकर, २८ नक्षत्रों को क्रमशः लिखें तथा श्लोकानुसार फल समझ लें ॥ १-३॥ इति ॥

अथ संवत्सरचक्रम् ॥ चक्रं सांवत्सरं वक्ष्ये यदुक्तं कोशलागमे । येन विज्ञायते सम्यग्वर्षे वर्षे शुभाशुभम् ॥ १॥ द्वादशारं लिखेच्चक्रं तत्र मेषादिराशयः । संस्थाप्याः क्रमयोगेन मीनान्ताः सव्यमार्गगाः ॥ २॥ तत्रचक्र समालेख्यं मेषादि राशिमार्गतः । प्रभवाद्यब्दमेकैकं वृष्टिः पञ्चप्रवर्तनैः ॥ ३॥ एवं राशौ स्थितं यत्र वत्सरं वर्तमानजम् । तद्राशिस्थं फलं वीक्ष्य यत्किंचिद्वार्षिकं मतम् ॥ ४॥ चैत्रे या प्रतिपच्छुक्ला तस्याः काले प्रवेशजे । एतद्विलोकयेच्चक्रं कालज्ञानविनिश्चितम् ॥ ५॥ तत्रसर्वान् ग्रहान्यस्य राशौ ये यत्र संस्थिताः । वर्षराशेर्विचिन्त्यास्ते रेखास्थानगता ग्रहाः ॥ ६॥ वर्षोपचयगाः

क्रूराः सौम्यास्त्रिधा प्रान्त्यवर्जिताः। ग्रहा रेखाप्रदा ज्ञेया मित्रमध्यगृहे स्थिताः ॥७॥ स्वर्क्षे द्विघ्नं फलं दत्ते स्वो-च्चे त्रिघ्नं तथैव च। फलार्धं शत्रुगेहस्थो नीचस्थो निष्फलो ग्रहः ॥८॥ एवं रेखाप्रमाणेन वर्षविंशोपका मताः। ज्ञात्वा दैशिकेन्द्रेण वर्षमध्ये प्रयत्नतः ॥९॥ एवं वर्षफलं प्रोक्तं चैत्रमासाद्यवासरात्। आषाढे कार्तिके प्येवं जलं धान्यं विचिन्तयेत् ॥१०॥ तत्र देशे पुरे ग्रामे फलं भिन्नं प्रदृश्यते। तस्मात्तत्कारणं वच्मि येन जानाति साधकः ॥११॥ देशादिराशिनाथस्य यो रेखादायको ग्रहः। मित्रोदासीनशत्रुत्वे फलं भिन्नं करोति सः ॥१२॥ मित्रे द्विघ्नं फलं दत्ते समः सौम्यं करोति सः। शत्रुः सर्वहरो ज्ञेयः सर्वदा कालचिन्तकैः ॥१३॥ एवं विचार्य कर्तव्या कालविंशोपका बुधैः। यथा जलं यथा धान्यं स्वस्वकाले विचिन्तयेत् ॥१४॥ इति संवत्सरचक्रम् ॥

भावार्थ॥ बारह कोष्ठ वाले चक्र को बना कर, उसमें मेष से मीन तक राशियों को सव्य मार्ग क्रम से लिखें। मेषादि राशि से प्रभव आदि संवत्सर को पाँच परिक्रमा में लिखें। जिस राशि में वर्तमान संवत्सर हो, उस राशि के वर्तमान फल को देखकर वार्षिक फल को कहें। शेष बातें श्लोकानुसार समझ लेनी चाहिए ॥१-१४॥ इति ॥

अथ स्थान बल चक्रम् ॥ स्थानचक्रं प्रवक्ष्यामि यदुक्तं लम्पटागमे। येन विज्ञायते सम्यक् स्थाने स्थाने शुभाशुभम् ॥१॥ स्थानपीडाप्रभावेण राज्ञः पीडा प्रजायते। तस्मादपी-डिते स्थाने स्थातव्यं सर्वदा नृपैः ॥२॥ स्थाननामोद्भवं राशिं कृत्वादौ द्वादशारके। राशिमण्डलकं न्यस्य वाममार्गेण संस्थितम् ॥३॥ नव तत्र ग्रहाः स्थाप्या मासचन्द्रश्च राशिगः। तेषां विलोकनं वीक्ष्य स्थान राशिगतं तथा ॥४॥ तृतीयैकादशे पादं द्विपादं व्योमबन्धुगे। त्रिकोणे त्र्यंघ्रि मूर्ध्न्यस्ते पूर्णं पश्यन्ति खेचराः ॥५॥ शन्यर्कराहुकेत्वाराः। पञ्च क्रूरग्रहा मताः। शेषं चतुष्टयं सौम्यं मासेन्दुश्चापि पञ्चमः ॥

एवं पञ्चग्रहाः क्रूराः पञ्च सौम्यास्तथैव च। तेषां शुभाशुभां दृष्टिः पूर्णपादचतुष्टयम्। पञ्चमे नवमे तेषां पादोना विंशतिर्भवेत्॥८॥ तत्र विंशोपका ज्ञेयाः सौम्यक्रूरग्रहोद्भवाः। एवं प्रसाधयेद्दृष्टिं युग्मखेटैः शुभाशुभम्॥९॥ बली स्तोकोनिता शेषा जायन्ते दृक् शुभाशुभाः। ते च विंशोपकास्तस्य स्थानस्य बल निर्णये॥१०॥ एवं देशे पुरे ग्रामे बलं यत्र शुभाधिकम्। तत्र स्थाने स्थितो राजा दुष्टारिष्टैर्न पीड्यते॥११॥ स्थान बल प्रभावेण स्वबलस्य बलोदयः। शत्रुसैन्यं क्षयं याति यावत्स्थाने शुभे स्थिते:॥१२॥
इति स्थान बल चक्रम्॥

भावार्थ॥ पहले स्थान के नाम से राशि बना कर, उसी को लग्न मान कर, द्वादश राशि चक्र में क्रमशः अन्य राशियों को स्थापित करें। उसमें ९ ग्रहों को यथास्थान स्थापित कर, मासिक चन्द्र को उनकी राशि में रखदे। फिर उनकी दृष्टियों को स्थान राशि पर देखकर, स्थान-बल को श्लोकानुसार कहे। स्थान-बल के प्रभावसे अपने बल का उदय होता है। यदि शुभस्थान में रहे तो शत्रु की सेना नष्ट हो जाती है॥ १-१२॥ इति॥

अथ चन्द्र शृङ्गोन्नति चक्रम्॥ मीनमेषोदये चन्द्रः सततं दक्षिणोन्नतः। उदगुन्नत शेषे स्यात् समस्तु वृषकुम्भयोः॥१॥ विद्वरः स्यात्समे चन्द्रे दुर्भिक्षं दक्षिणोन्नते। ईति रोगभयं शूले सुभिक्षं चोत्तरोन्नते॥२॥ नारदीय संहितायाम्॥ याम्यशृङ्गोन्नतश्चन्द्रः शुभदो मीनमेषयोः। सौम्यशृङ्गोन्नतः श्रेष्ठो नृयुग्मकरयोस्सदा॥३॥ समोक्षघटयोः कर्किचापयोः शरसन्निभः। चापवत् कीटहर्योस्तु शूलवत् तौलिकन्ययोः॥४॥ विपरीतोदितश्चेन्दुर्दुर्भिक्षकलहप्रदः। यथोक्तोऽभ्युदितश्चन्द्रः प्रतिमासं सुभिक्षकृत्॥५॥ आजाग्न्द्रपमूलेन्द्रधिष्ण्यानां याम्यगः शशी। अग्निप्रदः घोपच रवनसर्प विनाशकृत्॥६॥ विशाखामैत्रयोर्याम्यया पूर्वगः पापकृच्छशी। मध्यमः पितृदैवत्यो द्विदैवतं

सुभोत्तरे ॥७॥ अप्राप्य पौष्णमाद् भुक्त षड्क्षाणि शशी शुभ: । मध्यगो द्वादशार्द्रांद्यामतीत्य नववासरान् ॥८॥
यमेन्दो हीशतो येश मरुतश्चार्य तारका: । ध्रुवादितिद्विदैवत्य मध्यमाश्च परा: समा: ॥९॥ याम्य श्रृंगोन्नत:
श्रेष्ठ: सौम्य श्रृंगोन्नत: शुभ: । शुक्ले पिपीलिकाकारे हानिर्वृद्धिर्यथार्थ कृत ॥१०॥ सुभिक्षकृद् विशालेन्दुरवि
शालोर्ध नाशन: । अधोमुख: शस्त्रभयं कलहो दण्डसन्निभे ॥११॥ कुजाद्यैर्निहिते श्रृंगे मण्डले वा
यथाक्रमात् । आयार्धवृष्टिर्नृपति जनानां नाशकृच्छशी ॥१२॥ इति श्रृंगोन्नति चक्रम् ॥

भावार्थ ॥ यदि शुक्लपक्ष की द्वितीया तिथि को मीन तथा मेष राशि पर चन्द्रमा हो तो दक्षिण श्रृंग उन्नत होता है। वृष तथा कुंभ राशि में हो तो सम श्रृंग होता है। अन्य राशियों पर उत्तर उन्नत श्रृंग होता है। सम श्रृंग चन्द्रमा हो तो विग्रह, दक्षिण उन्नत श्रृंग हो तो दुर्भिक्ष, त्रिशूलाकार श्रृंग हो तो टिड्डी, रोग आदि का भय तथा उत्तर श्रृंग उन्नत हो तो सुभिक्ष होता है॥ नारद संहिता के अनुसार— मीन-मेष के चन्द्रमा का दक्षिण श्रृंग उन्नत हो तो शुभद; मिथुन-मकर के चन्द्र का सौम्य श्रृंग हो तो सुखद, वृष-कुंभ के चन्द्र का सम श्रृंग होता है। कर्क धन के चन्द्रमा का वाण सदृश श्रृंग, वृश्चिक-धनु के चन्द्रमा का धनुष तथा कन्या-तुला के चन्द्र का शूल के समान श्रृंग होता है। इसके विपरीत चन्द्रोदय हो तो दुर्भिक्षकारक होता है। शेष सब बातें श्लोकानुसार समझलें ॥ १-१२॥ इति ॥

एतानि सर्वचक्राणि ज्ञात्वा युद्धं समाचरेत्। जयेदिहन सन्देह: शक्रतुल्योपि वैरिणि ॥१॥ पञ्चावस्थास्वरूपं स्वरबलविमलं देहतत्त्वं प्रधानम्, राशीभे वेधहद्यं गृहवशफलदं वर्गाद्याद्यैश्च वर्णै र्बलविधि सहितं मातृका भेदरम्यं। भूपादीनां जयार्थे नरपति रकरोच्चक्रबन्ध प्रबन्धम् ॥ १-२॥ इति चक्रबन्धाख्यस्तृतीयोऽध्याय: ॥

अथ भूबलाध्यायः ॥ अथ वीरभूमिः ॥ चतुष्कोणं चतुर्द्वारं वीरभूमिं लिखेद् बुधः।
वायव्याग्नेयकोणे तु रेखाया द्विदलान्वितम् ॥१॥ बहुना वीक्ष्यमाणेन नात्र तेषां प्रयोजनम्। कृत्तिकादि लिखेद्
भानि सप्तसप्त क्रमेण च ॥२॥ चतुर्दिक्षु मध्य नक्षत्रं द्वारं तत्र लियोजयेत्। कोणे त्रयं त्रयं विद्याद्देया कृक्षग-
ता ग्रहाः ॥३॥ विचिन्त्य केतवः पञ्च यत्र यत्र व्यवस्थिताः। पूर्वद्वारि शिवो याम्ये हस्तः पश्चाच्च वारु
णम् ॥४॥ उत्तरद्वार्यहिर्बुध्न्यो मध्यस्तम्भचतुष्टयम्। पूर्वादिदलमध्यस्थे मेषाद्राशीन्न्यसेत्क्रमात् ॥५॥ वर्गा
ष्टके क्रमाद्देयं नन्दाद्यास्तिथयस्तथा। सिंहादिषट्कके क्षेत्रे भानोः कुम्भादिषड्विधौ ॥६॥ सूर्याचन्द्रमसो
र्मध्ये कालसूत्रमुदाहृतम्। आग्नेयाद्वातपर्यन्तं परिघाख्यं सदा भवेत् ॥७॥ शनि सूर्य दिने मध्ये कालः
पूर्वदिशि स्थितः। शुक्रेन्दु वायुतो याम्ये मध्ये जीवारपश्चिमे ॥८॥ बुधे वाय्योत्तरे कालः कालभेद
उदाहृतः। यामार्द्ध सूर्यदिवसे पूर्वे पश्चात्तु वायुगः ॥९॥ ततो दक्षिणमायाति ऐशान्यात्पश्चिमे ततः।
आग्नेयामुत्तरे भागे ततो नैर्ऋत्यगो रवेः ॥१०॥ चन्द्रे वाते कुजे याम्ये बुधे रौद्रे गुरौ परे। दहने
भार्गवे देयं शनिवारे तथोत्तरे ॥११॥ स्वाह्नि यामार्द्धया भुक्त्या स्वस्थानाद्विवद्भ्रमः। कालकेतुश्च
कालाग्निर्धूमकेतुः शिखी तथा ॥१२॥ विनाशकश्च पञ्चैते विषमा ब्रह्मणः सुताः। तिथिभे नवमे
चैव तृतीये कृतिभे तथा॥ त्रयोविंशतिभे चैव सूर्यभात्क्रमशः स्थिताः ॥१३॥ इति वीरभूमिः॥

अथ यात्रा॥ व्योमराम हता नाड्यो रामाष्टिविहता तिथिः। तिथिस्तात्कालिकी
ज्ञेया वर्तमान तिथि क्रमात् ॥१॥ उदिते स्वल्पलाभः स्याद्भ्रमिते बहुलाभकृत्। भ्रमितो जयमाप्नोति
सन्ध्याहानिरते क्षयः ॥२॥ तात्कालिकी तिथिर्यत्र तत्रोदयति योगिनी। सा सदा शुभदा वामे यात्राद्यूते
रणाङ्गणे ॥३॥ इन्द्रोऽग्निरन्तको रक्षोऽम्मरुदृनद शूलिनी। दिक्षु भ्रमति तत्काले गिरिजास्त्वाद्य सुतिथौ॥४॥
रविः कुजो गुरुश्चान्द्रिः शुक्रसौरीन्दु राहवः। पूर्वाद्याः प्रहरार्धेन तुर्ये तुर्ये दिशि भ्रमः ॥५॥ शुक्रवार

क्रमादह्नि रात्रौ व्यत्ययतो भ्रमः। कृष्णपक्षे गतिर्वामा जयदः पृष्ठ दक्षिणे ॥६॥ यस्यैवं राहुमाप्नोति जयं
विषम सङ्करे। नैवात्र बलवान्कालो भूबलो नात्र योगिनी ॥७॥ एतस्य बलमाश्रित्य दुर्गभङ्गस्य वांछया।
प्रस्थितः क्षणमात्रेण दुर्गं गृह्णाति दुर्जयम् ॥ दुर्गस्था दुर्जया ये च न ते स्युः सम्मुखास्तदा ॥८॥ काल
र्क्षतिथिभिर्घातो यत्र योधस्य वर्तते। प्रवेशं कारयेत्तत्र दिशि यास्यां शुभग्रहाः ॥९॥ दक्षपृष्ठगताः
पापा क्षतदा न भवन्ति हि। सम्मुखं वाम भागस्था भवन्ति क्षतदायकाः ॥१०॥ क्रूरास्तु दक्षिणे यस्य
शोभना वाम भागगाः। तदा शूरो भवेद्योधो विपरीते तु भङ्गदाः ॥११॥ स्वमित्र सम शत्रूणां गृहे पा-
-पास्तु घातदाः। अर्धपादोन सम्पूर्ण द्विगिणं त्रिघ्न वक्रिमे ॥१२॥ चैत्रादयस्त्रिगुणिता मासास्तत्तिथि-
संयुता.। नवभक्ताः क्रमाज्ज्ञेया शेषा यात्रा नवैव तु ॥१३॥ निष्कला राक्षसी चैव साधारणी च हारि-
-णी। तारणी कालयुक्ता च महाबलवती तथा ॥१४॥ ऐन्द्री ऐरावती चेति क्रमात्तत्फलमुच्यते।
निष्कला कार्यहारिणी राक्षसी व्याधिदायिनी ॥१५॥ साधारणी सत्फलदा हारिणी मृत्यु दायिनी ॥ तार
ण्यां सफलं कार्यं कालयुक्ता च कालदा ॥१६॥ महाबलायां लभते राज्यमैन्द्री च हानिदा। ऐरावती च
सफला गतस्य सफला क्रिया ॥१७॥ इति यात्रा ॥

अथ ओड्री भूमिः ॥ अथातः सम्प्रवक्ष्यामि भूबलानि समासतः। चतुर्विधेपि
संग्रामे येन स्याद्विजयी नृपः ॥१॥ चैत्राद्या ईशवायव्ये रक्षोग्नीन्दु धनाधिपे। वारुण्यां दक्षिणे रुद्रवायु
रक्षस्त्वथानिले ॥२॥ उड्रीभूमिरियं ख्याता प्रोक्ता या ब्रह्म यामले। चतुर्विधेपि संग्रामे जयदा पृष्ठ
पृष्ठ दक्षिणे ॥ इति ओड्री भूमिः ॥

अथ जालन्धरी भूमिः ॥ वायुरुद्राग्निनैर्ऋत्ये याम्यतोयोत्तराद्भजे। प्रविदि-
शि- अग्निरुद्रानिले रक्षे चैत्रादौ भ्रमणं भवेत् ॥२॥ एवं मासोदये यत्र तत्रस्था पृष्ठदक्षिणे।

इयं जालन्धरी भूमिः संग्रामे जयदा भवेत् ॥२॥ इति जालन्धरी भूमिः ॥

अथ पूर्णा भूमिः ॥ पूर्णाख्यां कथयिष्यामि पूर्णपीठाद्विनिर्गताम् । द्वन्द्वयुद्धेऽथवा दुर्गे याम्यार्धं भुक्तिरत्र च ॥१॥ पूर्वोत्तरे यमे शक्रे तोयान्तकोत्तरे जले। यथा दिने तथा रात्रौ पृष्ठदक्षि-णगो जयेत् ॥२॥ इति पूर्णभूमिः ॥

अथ कामाख्याभूमिः ॥ इन्द्रे यमे जले सौम्ये मेषादि भ्रमणं त्रयम् । रविसं-क्रान्तितो मासा ज्ञातव्या यत्र संस्थिताः ॥१॥ तत्स्थानाद् भ्रमणं सर्वं चतुर्नाडीदिगष्टके। पृष्ठ दक्षिणगा युद्धे कामाख्याऽरि क्षयंकरी ॥ इति कामाख्या भूमिः ॥

अथ कोलापुरी भूमिः ॥ शक्रोत्तरे जले याम्ये चैत्रादौ भ्रमणत्रयम् । मासो-दयगता यत्र तस्माच्च घटिका क्रमात् ॥१॥ तत्राष्टनाडिका भुक्तिरुदयश्च पुनः पुनः। इयं कोला-पुरी भूमिः पृष्ठदक्षिणगा शुभा ॥२॥ इति कोलापुरी भूमिः ॥

अथ एकवीरा भूमिः ॥ रुद्रे जलाग्नि सौम्ये च नैर्ऋत्येन्द्रानिले यमे। ईशेऽम्बुपावके सौम्ये चैत्रादि भ्रमणं भवेत् ॥१॥ एकवीरा महाभूमिः प्रोक्ता या चादियामले। पृष्ठ दक्षिणगा युद्धे जयदा नात्र संशयः ॥२॥ इति एकवीरा भूमिः ॥

अथ शिलिन्ध्रा भूमिः ॥ चैत्रादि पूर्वतो वामं भ्रमत् काष्ठाचतुष्टये। शिलिन्ध्रा ख्या महाभूमिर्जयदा पृष्ठदक्षिणे ॥१॥ बुधश्च मङ्गलः सौरिर्विधुर्गुरुरिति क्रमात्। सर्वे ग्रहा एवमेव रवि शुक्रौ च पश्चिमे ॥२॥ इति शिलिन्ध्रा भूमिः ॥

अथ महामारी भूमिः ॥ चक्रे द्वादशपत्राख्ये मेषाद्या वाममार्गतः। यत्रस्थो ऽर्कस्ततः सव्ये भुक्तिः सार्द्धघटीद्वयम् ॥१॥ महामारी समाख्याता सुबलानां बलोत्कटा। समरे जयदा

प्रोक्ता पृष्ठदक्षिणसंस्थिता ॥२॥ इति महामारी भूमिः ॥

अथ क्षेत्रपाली भूमिः ॥ विलोमाः पूर्वतो मासाश्चैत्राद्या दिक्चतुष्टये । प्रहराः सव्यमार्गेण मासस्थानादि गण्यते ॥१॥ चातुरङ्गे कलौ कोटे जयदा पृष्ठ दक्षिणे । क्षेत्रपाली महाभूमिर्भूबलानां बलोत्तमा ॥२॥ षड्बलाद्बलयुक्तानि भूबलान्यपराणि हि । एतद्बलेन रहिता वृथा चतुरशीतयः ॥३॥ इति क्षेत्रपाली भूमिः ॥

अथ वंशजा भूमिः ॥ पावके सौम्यनैर्ऋत्य इन्द्रवायुयमे हरे । जलाग्न्युत्तरनैर्ऋते पूर्वे चैत्रादिमासतः ॥१॥ वंशजेयं महाभूमिर्दैत्यवंशजयङ्करी । दक्षपृष्ठगता युद्धे जयदा नात्र संशयः ॥२॥ इति वंशजा भूमिः ॥

अथ रुद्रभूमिः ॥ दानवानां वधार्थाय रुद्रो रुद्रेण चिन्तितः । तं रुद्रं च प्रवक्ष्यामि जयाय विजयार्थिनाम् ॥१॥ दशदोर्दण्डपञ्चास्यं त्रिनेत्रं च जटाधरम् । महाप्रेतासनारूढं त्रिशूलायुधधारिणीम् ॥२॥ ऐन्द्रे वायौ यमे रुद्रे वारुणेग्नीन्दुराक्षसे । धान्यान्तके जले सौम्ये चैत्रमासयं क्रमः ॥३॥ दिनं दिनार्धयामं च प्रहरार्धं तथाग्रतः । एवं भुक्तिप्रमाणेन पृष्ठदक्षिणगो जयी ॥४॥ इति रुद्रभूमिः ॥

अथ कालावली भूमिः ॥ सप्तरेखाङ्किते चक्रे रुद्रादौ मासभादितः । सव्यमार्गेण भं दत्त्वा चाष्टाविंशति संख्यया ॥१॥ मासर्क्षाद्दिनभं ज्ञात्वा तस्मात्तात्कालिकं च भम् । रेखायामुदयाद् भुक्तिः सपादघटिकाद्वयम् ॥२॥ मासर्क्षं मासनामर्क्षं दिने दुर्दिनभं तथा । नाडिकाभ्रमणाद्यत्र तत्र तत्काल संज्ञकः ॥३॥ मासेन्दोर्मासभानुः स्याद्दिनेन्दोर्दिनभास्करः । घटिकेन्दोर्घटीभानुस्त्रिपञ्चर्क्षे सदा भवेत् ॥४॥ दक्षपृष्ठे रविं कुर्याद् वाममग्रे निशाकरम् । जपेदिह न सन्देह एकोपि शतमाहवे ॥

५॥ शक्तिरूपः स्थितश्चन्द्रः कालरूपी दिवाकरः । चन्द्रसूर्यान्तराले च कालरेखाऽभिधीयते ॥६॥
कर्णौ कोटे तथा द्वन्द्वे चातुरङ्गे महाहवे । लंघनीया न सा योधैः कालरेखाऽर्कसम्मुखे ॥७॥ इति काल
वली भूमिः ॥

अथ निरामया भूमिः ॥ पावकाद् द्वादशोरे च घटी पञ्च क्रमोदयः । उदयाद्वाममार्गेण भ्रमो
ज्ञेयो निरामये ॥१॥ पावकाद् द्वादशानां तु चैत्रादीनां क्रमोदयः । अग्निप्राग्रुद्रचन्द्रेषु वायुवारुणनैर्ऋते ॥२॥
यमाग्निपूर्वगादिक्षु मासे वाम भ्रमोदयः । पञ्च पञ्च घटीमानमासस्थान क्रमोदयः ॥३॥ यत्रोदयगता भूमिः
सा कार्या पृष्ठदक्षिणे । ततो जयमवाप्नोति संग्रामे ऽपि चतुर्विधे ॥४॥ इति निरामया भूमिः ॥

अथ जयलक्ष्मी भूमिः ॥ वह्न्यादि कोणगा वामा मासा याम्यास्तु सव्यगाः । दक्षपृष्ठ
स्थिता युद्धे जयदा जयलक्ष्मिका ॥१॥ इति जयलक्ष्मी भूमिः ॥

अथ महालक्ष्मी भूमिः ॥ वारुणाद्वामगा मासाश्चैत्रादिदिक्चतुष्टये । उदयास्तेन मार्गेण
प्रहरार्द्धे दिगष्टके ॥१॥ महालक्ष्मीरियं ख्याता यथोक्ता ब्रह्मयामले । दक्षपृष्ठगता युद्धे तस्य भङ्गो न विद्यते
॥२॥ इति महालक्ष्मी भूमिः ॥

अथ जया भूमिः ॥ अपसव्यगता मासाः पूर्वादिक चतुष्टये । दक्षपृष्ठे जयो युद्धे जय
भूमिरियं मता ॥१॥ इति जया भूमिः ॥

अथ विजया भूमिः ॥ इन्द्र वह्नि जले सौम्ये नैर्ऋत्येन्द्रयमोत्तरे । इन्द्रुवातान्तके रुद्रे
चैत्र मासाद्ययं क्रमः ॥१॥ एषा सा विजया भूमिर्युद्धे दक्षिण भागगा । जयदा नात्र सन्देहश्चातुरङ्गे महा
-हवे॥२॥ इति विजया भूमिः ॥

अथ भैरवी भूमिः ॥ षट्कोणमालिखेच्चक्रं पूर्वापरसमन्वितम् । षट्कं कर्कादिकं

प्राच्यां मकराद्यं च पश्चिमे ॥ १ ॥ पूर्वाग्नि वायुरुद्रे च नैऋत्ये वरुणालये । घटी पञ्च प्रमाणेन कर्कादौ भ्रमणं भवेत् ॥ २ ॥ तोयवाताग्नि नैऋत्ये शूलिनीन्दुदिशि क्रमात् । भ्रमो मृगादिगे षट्के प्रोक्ता भूमिश्च भैरवी ॥ ३ ॥ जयदा दक्षिणे भागे मृत्युदा वामभागके । सम्मुखे भङ्गदा युद्धे पृष्ठस्था सन्धिकारिका ॥ ४ ॥ इति ॥

अथ बाला भूमिः ॥ यत्रोदयगता बाला विशेषात्पृष्ठतो रणे । नश्यन्ति शत्रुसङ्घाताः सिंहादेव यथा मृगाः ॥ १ ॥ अर्द्धयामोदया बाला सम्मुखी जयदा मता । तदूर्ध्वं वामगा श्रेष्ठा पृष्ठगा निश्चितं शुभा ॥ २ ॥ इति बाला भूमिः ॥

अथ योगीश्वरी भूमिः ॥ मेषादि विन्यसेच्चक्रं द्वादशारे ऽपसव्यतः । पूर्वाद्युदयतः सर्वे भ्रमः पञ्चघटीमितः ॥ १ ॥ इयं योगीश्वरी भूमिर्जयदा पृष्ठदक्षिणे । अहोरात्रेण सा सर्वं चक्रं क्रामति सर्वदा ॥ २ ॥ इति योगीश्वरी भूमिः ॥

अथ चण्डी भूमिः ॥ इन्द्रनैर्ऋत्यसोमाग्नि तोयरुद्रान्तकानिले । घटीद्वय प्रमाणेन दिनाद्यौ भ्रमणं क्रमात् ॥ १ ॥ एवमेवापराह्णेऽपि चण्डी भ्राम्यति सर्वदा । यस्य दक्षिणगा युद्धे तस्य भङ्गो न विद्यते ॥ २ ॥

अथ याम भूमिः ॥ उदयात्पूर्वतः सर्वे यामे यामे दिगष्टके । यामे भूमिर्भ्रमत्येवं जयदा पृष्ठ दक्षिणे ॥ १ ॥ इति याम भूमिः ॥

अथ भुम्भुका भूमिः ॥ ईशाद्या वामतो यान्ति यामार्धं ककुबष्टके । भुम्भुकाख्या भ्रमत्येवं जयदा वाम सम्मुखी ॥ १ ॥ इति भुम्भुका भूमिः ॥

अथ कर्तरी भूमिः ॥ कृत्वा त्रिरेखा मेषाद्यास्तिर्यग्गास्तु तथा पुनः । पूर्वरेखादितो न्यस्य मेषाद्याः सव्यमार्गगाः ॥ १ ॥ यत्रराशौ स्थितश्चन्द्रस्तद्वण्डे क्रमतो रविः । रविः पृष्ठे शशी चाग्रे जयदा कर्तरी स्मृता ॥ २ ॥ इति कर्तरी भूमिः ॥

अथ शार्दूली भूमि: ।। चैत्राद्युत्तरतो मासा द्वादशैर च सृष्टिगा: । यत्रस्थास्तत्रतो यान्ति पञ्चपञ्च घटी: क्रमात् ।।१।। भङ्गदा पृष्ठगा प्रोक्ता मृत्युदा वामत: स्थिता । जयं ददाति दक्षागेने शार्दूली समरे स्थिता ।।२।। इति शार्दूली भूमि: ।।

अथ सिंहली भूमि: ।। वाममार्गेण पूर्वादिपामार्धं च दिगष्टके । वामाग्रे जयदा प्रोक्ता सिंहली समरे सदा ।। इति सिंहली भूमि: ।।

अथ तन्वी भूमि: ।। तिथ्यादावुदयं याति नाडिका षट् प्रमाणत: । पूर्वयाम्योदके सौम्ये ब्रह्मस्थाने तथैव च ।।१।। तन्वी भूमिरियं ख्याता जयदा पृष्ठ दक्षिणे। ब्रह्मस्थानो दये मृत्यु: सैन्ययो रुभयोरपि ।।२।। इति तन्वी भूमि: ।।

अथ महामाया भूमि: ।। चैत्राद्या: पूर्वतो मासा: सव्यकोष्ठचतुष्टये। पृष्ठदक्षिणगा भव्या महामाया त्वियं मता ।। १।।इति महामाया भूमि: ।।

अथ माहेश्वरी भूमि: ।। दक्षिणायुदयं याति चैत्राद्यं दिक्चतुष्टये। जयदा पृष्ठदक्ष-स्था भूमिरेषा महेश्वरी ।। १।। इति माहेश्वरी भूमि: ।।

अथ देव कोटि भूमि: ।। अर्धयामो भ्रमेत्सव्ये शक्रस्थानाद्दिगष्टके। पृष्ठस्था जयदा युद्धे देवकोटिरियं मता ।। १।। इति देवकोटि भूमि: ।।

अथ शिवा भूमि: ।। इन्द्वादितिथियुग्मं भुक्ति: सव्यमार्गे दिगष्टके। दक्षिणे जयदा प्रोक्ता शिवा भूमिर्महाहवे ।। १।। इति शिवा भूमि: ।।

अथ शक्ति भूमि: ।। आदौ तिथि त्रयं रुद्रे त्रयं चैव जलोद्भवे । ततश्चैका यमाग्न्यायामग्नि भागे तिथिद्वयम् ।।१।। वायौ सौम्ये तथैवैका पूर्वस्यां तु तिथि त्रयम्। नैर्ऋत्यैका कृता

पृष्ठे शक्तिभूमिर्जयप्रदा ॥२॥ इति शक्ति भूमिः॥

अथ धूम्रा भूमिः॥ चैत्रादि वा युतो मासा संहारेण दिगष्टके। पुनः पश्चिमतः शेषाश्चतुर्दिक्षु क्रमेण च॥१॥ पृष्ठदक्षिणगा श्रेष्ठा भङ्गदा वाम सम्मुखी। इयं धूम्राभिधा भूमिः सर्वशत्रुभयङ्करी॥२॥इति॥

अथ माना भूमिः॥ वह्नि शक्रोत्तरो वायौ यमे रुद्राम्बुपावके। नैर्ऋत्येन्दु यमे तोये चैत्रादि भ्रमणं ततः॥१॥ पृष्ठस्था जयदा नित्यमन्यत्रैषा न शोभना। इयं मानाह्वया भूमि युद्धकाले महाबला॥२॥इति॥

अथ वाराटिका भूमिः॥ चैत्रादिमासषट्के तु पूर्वभोग कृतोदया। शेषषट्के तु वारुण्यां पृष्ठे भव्या वराटिका॥१॥ इति वराटिका भूमिः॥

अथ त्रिमुण्डा भूमिः॥ वह्नितः सव्यमार्गेण मासाश्चैत्रादि कोणगाः। पृष्ठ दक्षिणगा युद्धे त्रिमुण्डा जयदा मता॥१॥ इति त्रिमुण्डा भूमिः॥

अथ मत्सरी भूमिः॥ वायुतः सव्यमार्गेण यामार्धं ककुभं प्रति। सम्मुखी वरदा प्रोक्ता मत्सरीयं महाहवे॥१॥ इति मत्सरी भूमिः॥

अथ धर्मा भूमिः॥ पूर्वतः सृष्टि मार्गेण वेद संख्या घटीक्रमात्॥ दक्षपृष्ठे स्थिता प्रोक्ता धर्मा भूमिरियं मता॥१॥ इति धर्मा भूमिः॥

अथ मृता भूमिः॥ द्वादशारेन्द्रतः सव्ये चैत्रादिभ्रमणं क्रमात्। वामाग्रे संस्थिता युद्धे मृताख्या मृत्यु दायिका॥१॥ इति मृताभूमिः॥

अथ सृष्टि भूमिः॥ इन्दु वायु यमे रुद्रे जलाग्नि शशि राक्षसे। यामोदयाद्भवेद्भूमिः सृष्टिः पृष्ठे जयप्रदा॥१॥ इति सृष्टि भूमिः॥

अथ क्षयाक्षया भूमिः॥ चैत्राद्या पूर्वतो मासा वामहस्तादिगष्टके। पुनर्मार्गादितो

मासाः शेषाः काष्ठाचतुष्टये ॥१॥ क्षयाभूमिर्जया देवं दक्षिणेन तथाऽक्षया। क्षया वामेऽक्षया दक्षे जयदा नात्र संशयः ॥२॥ इति क्षयाक्षयाभूमिः ॥

अथ दुर्मती भूमिः ॥ तुर्यां तुर्यां दिशं याति वामं चैत्रादि पूर्वतः। समेर दक्षपृष्ठस्था दुर्मतीयं जयप्रदा ॥१॥ इति दुर्मती भूमिः ॥

अथ प्रहरा भूमिः ॥ पूर्वोत्तराग्निनैर्ऋत्ये यमे तोयानिले शिवे। प्रहरार्द्धोदया सा तु पृष्ठस्था प्रहरा भुवि ॥१॥ इति प्रहराभूमिः ॥

अथ गौरी काली भूमिः ॥ पूर्वोत्तरदिशोः शुक्ले कृष्णे पश्चिमयाम्ययोः। जयदा पृष्ठभागेन गौरी काली क्रमेण च ॥ अग्रस्था शुभदा गौरी काली पृष्ठे शुभावहा ॥१॥ इति गौरी काली भूमिः ॥

अथ नारहरी भूमिः ॥ वह्नितः सव्यमार्गेण याममोगो दिगष्टके। नारहर्याख्यका भूमिर्जयदा पृष्ठ दक्षिणे ॥१॥ इति नारहरी भूमिः ॥

अथ बलाभूमिः ॥ पूर्वोत्तर जले याम्ये वह्नीशे वायुराक्षसे। यमेन्दे सौम्यतोये च चैत्रादिमास भोगगा ॥१॥ इयं भूमिर्बलाख्या सा सन्मुखी वामगा शुभा। जयदा दक्षपृष्ठे च युद्धकाले न संशयः ॥२॥ इति बला भूमिः ॥

अथ भूचरी खेचरी भूमिः ॥ मेषादि द्वादशेरे च वाममार्गेण भूचरी। खेचरी दक्षमार्गेण भ्रमो भवति सर्वदा ॥१॥ चक्रस्था भूचरे चक्रे प्रोक्ताः खेचरगा ग्रहाः। भूचरा दक्षपृष्ठस्थाः खेचरा वामसम्मुखाः ॥२॥ भूचराः स्थापि जयदाः खेचराश्चैव यायिनः। सौम्यासौम्यविभागेन विज्ञाय फलमादिशेत् ॥३॥ इति॥

अथ गुह्याभूमिः ॥ पूर्वाह्ने पावके कोणे पराह्ने वायुगोचरम्। इयं गुह्याभिधा भूमिर्जयदा पृष्ठ दक्षिणे ॥१॥ इति गुह्या भूमिः ॥

अथ द्वादशी भूमि: ॥ पूर्वतो निवहन्मासा द्वादशोर च सृष्टिगा: । चैत्राद्या द्वादशी भूमि जयदा पृष्ठ दक्षिणे ॥१॥ इति द्वादशी भूमि: ॥

अथ भद्राभूमि: ॥ आग्नेयकोणतो वामं पूर्णिमादितिथि क्रमात् । सार्द्ध दिनत्रयं भद्रा वा-यव्ये सार्द्ध पञ्चकम् ॥१॥ सम्मुखी वामगा वर्ज्या यात्रायां समरे तथा । पुरग्रामगृहादीनां प्रवेशे शुभमिच्छता ॥२॥ इति ॥

अथ केवला भूमि: ॥ इन्द्र वह्नीश सौम्ये च नैर्ऋत्येन्दुयमे जले । तोये याम्योत्तरे वायौ भ्रम श्चैत्रादि मासत: ॥१॥ जयदा पृष्ठ दक्षस्था भंगदा वाम सम्मुखी । केवलेयं महाभूमिर्युद्धे चैवं चतुर्विधे ॥२॥ इति ॥

अथ त्रैलोक्य विजया भूमि: ॥ इन्द्र चन्द्राग्नि नैर्ऋत्ययाम्याम्बु वायुरुद्रगा । नैर्ऋत्यामनि ले सौम्ये रुद्रेन्द्राग्नियमाधिपे ॥२॥ प्रतिपदादि अमान्तेषा जयदा पृष्ठ दक्षिणे । त्रैलोक्य विजया भूमिर्भूब-लानां बलोत्कटा ॥२॥ इति त्रैलोक्य विजया भूमि: ॥

अथ कालपाशाभूमि: ॥ वारेद्ध: पूर्वदिग्भागे ततः सव्येन मन्दग: । यत्रस्थस्तत्रकाल: स्यात् पाशस्तस्य तु संमुख: ॥१॥ दक्षिणस्थ: शुभः काल: पाशो वाम दिगाश्रय: । यात्रायां समरे श्रेष्ठस्ततोऽ न्यत्र न शोभन: ॥२॥ इतिकालपाशा भूमि: ॥

अथ करालिका भूमि: ॥ चैत्राद्या: पूर्वतो मासा वामगा दिक्चतुष्टये । यत्रस्थास्तत्रतो यांति यामार्द्धेन दिगष्टके ॥१॥ भङ्गदा पृष्ठदक्षे च जयदा वामसंमुखी । इयं करालिका भूमि: संग्रामे शत्रुना-शिनी ॥२॥ इति करालिका भूमि: ॥

अथ बडवा भूमि: ॥ मध्यबाह्य क्रमेणैव पूर्वतो वाममार्गगा । वामार्द्धमुदयं याति सर्वकालं दिगष्टके ॥१॥ ब्राह्मोदया तु बाह्यानां मध्यस्थानां तु मध्यगा । यायिनां बाह्यगा देया स्थायिना तु हि मध्यगा ॥ वडवेयं महाभूमि: शत्रूणां क्षय कारिणी ॥ इति वडवा भूमि: ॥

अथ अपराजिता भूमि: ।। चैत्राद्या: पूर्वतो वामं भ्रमणं दिक्चतुष्टये। सम्मुखी जयदा प्रोक्ता भूमिरेषाऽपराजिता।।१।। इति अपराजिता भूमि:।।

अथ रौद्री भूमि: ।। नैऋत्यादि भ्रमो वामे तुर्ये तुर्ये दिगष्टके। चैत्रादिमासगा रौद्री जयदा पृष्ठ दक्षिणे ।। इति रौद्री भूमि:।।

अथ वामलोचना भूमि: ।। उदयाद् घुदलं यावद्दक्षिणस्थो जयी भवेत्। तदूर्ध्वं चोत्तर-स्थं तु भूरेषा वामलोचना ।। अथ वामलोचना भूमि: ।।

अथ शिशु भूमि: ।। चैत्राद्या पूर्वतो वामं भ्रमणं दिक्चतुष्टये। सम्मुखी जयदा प्रोक्ता शिशुभूमिरियं मता ।।१।। इति शिशु भूमि: ।।

अथ मातङ्गी भूमि: ।। कर्कादिरुडुविदिशो मकराद्यग्निकोणत:। यामैकं सव्यमार्गेण मातँगी पृष्ठगा जयेत् ।। १।। इति मातङ्गी भूमि:।।

अथ अभेद्या भूमि: ।। पूर्वतो वाममार्गेण घट्य: पंच दिगष्टके। अभेद्या जयदा प्रोक्ता सम्मुखी समरे सदा ।।२।। इति अभेद्या भूमि: ।।

अथ दहनी भूमि: ।। द्वादशारे घटी पञ्च पूर्वतो वाममार्गगा। जयदा वामपृष्ठस्था दहनी भूमिराहवे ।।१।। इति दहनी भूमि: ।।

अथ जिता भूमि: ।। वह्न्यादि चैत्रतो मासा: सव्यमार्गेण कोणगा:। पञ्चनाडी भ्रमन्त्येवं जिता पृष्ठे जयप्रदा ।।१।। इति जिता भूमि: ।।

अथ वायुबला भूमि: ।। द्वादशारेन्दुतो वामं चैत्रादौ पत्र संस्थिता:। तत्र तो घटिका: पञ्च सव्यमार्गेण निर्मिता: ।। १।। जयदा दक्षिणे भागे मृत्युदाऽन्यत्र संस्थिता। प्रोक्ता वायुबला

भूमिः स्वरशास्त्रे बलोत्कटा ॥ २॥ इति वायु बला भूमिः ॥

अथ वर्गकालानली भूमिः ॥ अष्टारे वाममार्गेण न्यसेद्वर्गाष्टकं क्रमात् । भ्रमणं सृष्टिमार्गेण यामार्द्धमुदयो भवेत् ॥ १॥ योधाना मोदिते वर्गे पृष्ठ दक्षिणतः कृते । वर्गकालानली भूमिर्द्वन्द्व युद्धे जयावहा ॥२॥

अथ कापालिका भूमिः ॥ दिनमध्यस्थ नाडिका कपालस्थे दिवाकरे । नशे स्थापी जये-त्स्थायी भूमिरेषा कपालिका ॥ १॥ इति कापालिका भूमिः ॥

अथ अनलानिला भूमिः ॥ पूर्वाह्ने पावके कोणे ऽपराह्ने वायु कोणगा । जयदा दक्ष पृष्ठस्था भूमिरेषा ऽनलानिला ॥ १॥ इति अनिलानिलाभूमिः ॥

अथ चन्द्र सूर्य भूमिः ॥ दक्षपृष्ठे रविबिम्बं जयार्थं रणमूर्द्धनि । चन्द्रबिम्बं ततो रात्रौ पुरो वामे तु शोभनम् ॥ १॥ इति चन्द्र सूर्य भूमिः ॥

अथ ग्रह भूमिः ॥ दक्ष पृष्ठ स्थिताः क्रूरा सौम्या वामाग्र संस्थिताः । संग्रामे जयदाः प्रोक्ता मिश्रामिश्र फल प्रदाः ॥ १॥ इति ग्रह भूमिः ॥

अथ राशि भूमिः ॥ भास्करो यत्र संतिष्ठेद् द्वादशारे ऽपसव्यतः । राशिर्दक्षिणपृष्ठ-स्था संग्रामे जयदा मता ॥ १॥ इति राशि भूमिः ॥

अथ लग्न भूमिः ॥ सूर्यराश्यादितः सव्यलग्नं तत्काल संभवम् । पृष्ठ दक्षिणगं कृत्वा जयेद्युद्धे न संशयः ॥ १॥ इति लग्न भूमिः ॥

अथ राहुकालानला भूमिः ॥ राहुकालानले चक्रे कृत्वा चन्द्र दिवाकरौ । वदनाद्यङ्गभे-देन कथयिष्यामि भूबलम् ॥ १॥ राहोर्मुखस्थितश्चन्द्रः पृष्ठभागे जयप्रदः । गुह्य सम्पुटगो युद्धे वामाग्रे च जयावहः ॥ २॥ कपाल पुच्छयोश्चन्द्रो वाममार्गे जयप्रदः । भानुः सर्वत्र सर्वाङ्गे जयदः पृष्ठ दक्षिणे ॥ ३॥

मू० सं० १२९४

भा० टी०

अथ स्वरभूमि.।। अकाराद्याः स्वराः पञ्च नन्दादितिथिषु क्रमात्। सव्यमार्गोदयास्ते
च पञ्चस्थानेषु सर्वदा ।।१।। ततस्तिथ्यादितो भुक्तिः प्रत्येकं रविनाडिका। दक्षपृष्ठस्थिता प्रास्तावामा-
-ग्रे मृत्युदायिका ।।२।। मध्यभागोदये मृत्युः सैन्ययोरुभयोरपि। किञ्चित्स्थायी जयी युद्धे स्वरभूमिरियं
मता ।।३।। इति स्वर भूमिः ।।

अथ त्रिकाल रुद्र भूमिः ।। चैत्रादि पूर्वतः सव्ये चतुर्दिक्षु त्रयं त्रयम्। त्रिकालरुद्रभूम्ये-
-षा जयदा पृष्ठदक्षिणे ।।१।। इति त्रिकाल रुद्र भूमिः ।।

अथ ऋक्ष राहुः ।। सप्तरेखाङ्किते चक्रे कृत्तिकादि न्यसेद् बुधः। धिष्ण्ये यत्रस्थितो
राहुर्ऋक्षराहुः स उच्यते ।।१।। इति ऋक्ष राहुः ।।

अथ मास राहुः ।। द्वादशारेऽपसव्येन मासांश्चैत्रादिकान्न्यसेत्। तन्मासस्थितो
राहुर्मास राहुः स उच्यते ।।१।। यस्मिन् राशौ राहुरस्ति तत्संख्याके मासि स स्याथा ।। इति मास राहुः ।।

अथ पक्ष राहुः ।। पूर्वोत्तरगतः कृष्णे शुक्ले पश्चिमदक्षिणे। पक्षभुक्तिप्रमाणेन पक्ष
राहुरयं मतः ।।१।। इति पक्ष राहुः ।।

अथ दिन राहुः ।। त्रिंशद्दण्डाङ्किते चक्रे वह्नितः पूर्णिमादिकान्। तिथीन् विन्यस्य स्या-
देवं दिनराहुरिहोच्यते ।।१।। सप्तरेखाङ्किते चक्रे कोणरेखाद्वयाङ्किते। कृत्वा विलोममार्गेण संस्थाप्यं तिथि
मण्डलम् ।।२।। पूर्णिमाद्यग्निरेखातस्तिथिरेखा क्रमेण च। तिथिभोगभ्रमो राहुर्दिनराहुः स उच्यते ।।३।।इति।।

अथ खण्ड राहुः ।। ऐन्द्र्यां कृष्णे तृतीयायां सप्तम्यां शूलिनो दिशि। दशम्यां
धनदाशायां वायव्यां भूतवासरे ।।१।। शुक्लपक्षे तु वारुण्यां चतुर्थ्यां समुदेत्यसौ। नैर्ऋत्ये च तथाष्टम्या-
मेकादश्यां यमे दिशि ।।२।। आग्नेये पञ्चदश्यां च मासराहूदये सति। खण्डगत्या भ्रमत्येवं खण्ड

राहुस्तथोच्यते ॥ ३॥ इति खण्ड राहु ॥

अथ अर्द्धयाम राहुः ॥ इन्दुवायुयमे रुद्रे तोयाग्निशशिराक्षसे । यामार्द्धमुदितो राहुर्भ्रमत्येवं दिगष्टके ॥ १॥ इति अर्द्धयाम राहुः ॥

अथ गूढार्धराहुः ॥ ईशानयमवातेन्दु रक्षः सोमाग्निवारुणे । पूर्वाह्णे ऽपि भ्रमत्येवमपराह्णे ऽप्ययं क्रमात् ॥ जलाग्नि सौम्यनैर्ऋत्ये शक्रानिलयमे हरे ॥ १॥ इति गूढार्धराहुः ॥

अथ मुहूर्त राहुः ॥ पूर्वरात्रौ भ्रमत्येवं अपराह्णे ऽप्ययं क्रमात् । अह्नः पञ्चदशांशेन मुहूर्तः परिकीर्तितः ॥ एवं मुहूर्तको राहुर्ज्ञातव्यः स्वरवेदिभिः ॥ १॥ इति मुहूर्त राहुः ॥

अथ कुलिक राहुः ॥ रविः सोमः कुजः सौम्यो गुरुः शुक्रः शनिस्तमः । ऐन्द्रादीशान पर्यन्तमर्द्धयामभ्रमः स्मृतः ॥ १॥ अर्द्धयामोदयः खेटः स्थाप्यः प्राच्यां ततः शनिः । यत्रास्ते तद्दिशि क्षेपं कुधीः कुलिकजं तमः ॥२॥ दिनवारोदयाज्ज्ञेया तुर्यतुर्यदिशि क्रमात् । ज्ञेयः कुलिकजो राहुः स्थाने यत्र शनैश्चरः॥३॥ इति कुलिक राहुः ॥

अथाष्टविधराहुः ॥ सम्मुखी वामसंस्था वा यस्येयं राहुमण्डली । पराजयो भवेत्तस्य वादे द्यूते रणादिषु ॥ १॥ यस्य दक्षिणपृष्ठस्था ज्ञेया राहुपरम्परा । सहस्रं च शतेनापि परसैन्यं निकृन्तति॥२॥

अथ राशिचन्द्रः ॥ दिशि यस्यां स्थितश्चन्द्रः सव्यमार्गेण राशिगः । राशिचन्द्रः स विज्ञेयः सर्वदा स्वरवेदिभिः ॥ १॥ इति राशिचन्द्रः ॥

अथ उदयचन्द्रभूमिः ॥ सप्तसप्तशलाकाख्ये कृत्तिकादि समन्विते । शुक्लपक्षे द्वितीयायां यत्र भे ऽस्त्युदितः शशी ॥ १॥ इति उदयचन्द्रभूमिः ॥

अथ मासचन्द्र भूमिः ॥ चक्रे सप्तशलाकाख्ये वहन्मासर्क्षगः शशी । मासचन्द्रो

भवेदेवं ज्ञातव्य: स्वरवेदिभि: ॥ १॥ इतिमास चन्द्र भूमि: ॥

अथ पक्ष चन्द्र भूमि: ॥ पूर्वोत्तर गत: शुक्ले कृष्णे पश्चिमदक्षिणे । पक्षभुक्तिप्रमाणेन पक्षचन्द्र इहोच्यते ॥ १॥ इति पक्षचन्द्र भूमि: ॥

अथ दिन चन्द्र भूमि: ॥ चक्रे सप्तशलाकाख्ये रेखायां मध्ये ऽर्कभं न्यसेत् । ततो वामेन चन्द्रर्क्षे दिनचन्द्र इहोच्यते ॥ १॥ इति दिन चन्द्रभूमि: ॥

अथ तात्कालिक चन्द्र: । दिन ऋक्षात्तु सव्येन सपादघटिकाद्वयम् । प्रतिनाड्यां भवेद्भुक्तिरेषस्तात्कालिक: शशी ॥ १॥ इति तात्कालिक चन्द्र: ॥

अथ सप्तविध चन्द्र: ॥ सप्तमो बिम्बरूपेण प्रत्यक्ष इह दृश्यते । वामाग्रे जयदश्चन्द्र एवं सप्तविध: स्मृत: ॥ १॥ इति सप्तविध चन्द्र: ॥

अथ अयन भानु: ॥ दक्षिणायनगो भानुर्जयदो याम्यपश्चिमे । उत्तरायण संस्थोपि जयद: शक्रसोमयो: ॥ १॥ इति अयन भानु: ॥

अथ दिनभानुस्तात्कालिको भानुश्च ॥ सप्तरेखाङ्किते चक्रे भानुभं यत्रसंस्थितम् । दिनभानुर्भवेदेवं चन्द्रवच्चेष्टकालिक: ॥ इति दिनेष्टकालिक सूर्य: ॥

अथ यामले सूर्यबिम्बभू: । प्रत्यक्षं दृश्यते यस्यां भानुबिम्बं दिशिस्थितम् । दक्षपृष्ठस्थिता एते कर्त्तव्या जयकाङ्क्षिभि: ॥ १॥ इति यामले सूर्य बिम्बभूमि: ॥

अथ तिथि योगिनी ॥ पूर्वस्यामुदये ब्राह्मी प्रथमे नवमे तिथौ । माहेश्वरी चोत्तरस्यां द्वितीयादशमी तिथौ ॥ १॥ एकादश्यां तृतीयायां कौमारी वह्नि कोणगा । चतुर्थीद्वादशी प्रोक्ता वैष्णवी नैर्ऋती तथा ॥ २॥ वाराही दक्षिणे भागे पञ्चमी च त्रयोदशी । षष्ठी चतुर्दशी चैव

इन्द्राणी पश्चिमे स्थिता ॥ ३॥ पूर्णिमायां च सप्तम्यां वायव्ये चण्डिकोदय:। नष्टचन्द्र दिनाष्टम्यां महालक्ष्मी शिवालये ॥ ४॥ इति तिथि योगिनी ॥

अथ तत्काल योगिनी॥ यत्रोदयगता देवी ततो यामार्द्ध भुक्तिदा। भ्रमन्ती तेन मार्गेण भवेत्तत्काल योगिनी ॥ ५॥ इति तत्काल योगिनी ॥

अथ वार योगिनी चक्रम् ॥ इन्दु चन्द्राग्निनैर्ऋत्ये याम्ये तोयानिले हरे। सूर्यादिषु च वारेषु वर्जयेद्वार योगिनीम् ॥ ६॥ दिक्स्थानां संमुखे दृष्टिर्विदिक्स्था वारुणे मता। कोणस्थानां च कोणे च तिथि दिश्युदय: क्रमात् ॥ ७॥ जयदा पृष्ठ दक्षस्था भङ्गदा वाम सम्मुखी। त्रिविधं योगिनी चक्रमित्युक्तं ब्रह्मयामले ॥ ८॥ इति वार योगिनी चक्रम् ॥

अथ तिथि काल:॥ मध्यबाह्यक्रमेणैव वामे प्रतिपदादिषु। वर्तमाने तिथौ कालं वर्जयेदाश्रयक्षये ॥ १॥ इति तिथि काल: ॥

अथ षट्त्रिंशत्काल:॥ षट्त्रिंशद् ध्रुवकं कृत्वा गताहानि च योजयेत्। अष्टशेषे भवेत्कालो जयद: पृष्ठ दक्षिणे ॥ १॥ इति षट्त्रिंशत्काल: ॥

अथ वार काल चक्रम् ॥ ज्ञान्यर्क भौम जीवेषु मध्ये काल: प्रकीर्तित:। बाह्ये शुक्रेन्दु सौम्येषु वर्जनीय: सदा रणे ॥ १॥ इति वार काल चक्रम् ॥

अथ वायु चक्रम् ॥ दक्षे पृष्ठे स्थितो वायुर्जयदो भवति ध्रुवम्। वामाग्र भङ्गद: प्रोक्त: सर्वयुद्धेषु सर्वदा ॥ इति वायु चक्रम् ॥

अथ शारीर ऊर्मि:॥ युद्धकाले यदा चन्द्र: स्थायी जयति निश्चितम्। यदा सूर्य: प्रवाहस्तु यायी विजयते तदा ॥ १॥ पार्थिवे सक्षतं युद्धं सन्धिर्भवति वारुणे। विजयो वह्नितत्त्वेन

वायौ भङ्गो मृतिस्तु रवे ॥ २॥ पूर्णनाडीगतः पृष्ठे शून्यगं च तदग्रतः । शून्यस्थाने गतः शत्रुर्म्रियते नात्र संशयः ॥३॥ पूर्वोत्तरदिशोश्चन्द्रभान्वौ पश्चिमयाम्ययोः । स्थितस्तत्र जयी युद्धे स्थायी यायी क्रमेण च ॥ ४॥ वामनाड्युदये चन्द्रः कर्तव्यो वामसम्मुखम् । सूर्यवाहे तथा सूर्यः पृष्ठदक्षिणगो जयेत् ॥५॥ इति शारीरभूमिः ॥

अथ रुद्रकालः ॥ इन्द्रो वायुयमेशार्कं च हुतभुग् पक्षेशदैत्येश्वरौ, सूर्यादौ घटिकाचतुष्कमुदये रौद्रो भ्रमन्सर्वदा । द्यूते कुक्कुट मेष हस्ति महिषी स्याद्द्वन्द्वयुद्धे जयोः, मृत्युः खेचर बालवाद विजयः पृष्ठे तु वामे जयः ॥ १॥ इति रुद्रकालः ॥

एतानि भूबलान्यत्र ज्ञातव्यान्युदितः क्रमात् । सन्निपाते विशेषेण भूमिमेलापको बली ॥१॥ मासाख्या च तुरङ्गाख्ये दिनाख्या कवि सङ्गरे । यामाख्या कोटसंग्रामे सूक्ष्माख्या खलके रणे ॥२॥ मासे पक्षे दिने नाड्यो युद्धकं भ्रमणं पुरा । यथा दिने तथा रात्रौ ज्ञातव्यं स्वरवेदिभिः ॥ तस्माद्वीक्ष्य प्रयत्नेन बलं देयं स्वरोदये ॥ ३॥ युद्धस्य प्राग्दिने सायं व्रतस्थः स्वरपारगः । भास्करस्य महामन्त्रं जपेदयुत संख्यया ॥४॥ दशांशं होमयेत्कुण्डे त्रिकोणे द्वादशाङ्गुले । अर्कस्य च शमीपुष्पैर्मध्वाज्यार्कपरिप्लुतैः ॥५॥ "ॐ ह्रूँ ह्रीं ह्रूँ सः सूर्याय नमः" इति मन्त्रः स्वाहान्तं होमयेत् ॥

युद्धारम्भे हयारूढः स्वरज्ञो दृढमानसः । पुनरेव जपेन्मन्त्रं शनकैः सूर्यसम्मुखम् ॥६॥ शुक्लवासोत्तरे कृत्वा ततः सूर्यं विलोकयेत् । यावच्च दृश्यते चिह्नं शुभं वा यदि वाऽशुभम् ॥७॥ सम्पूर्णतेजसा युक्ते व्यक्ते निकटवर्तिनि । श्वेते च कर्बुरे पीते सूर्ये यायी जयी भवेत् ॥८॥ खण्डिते खण्डसंयुक्ते छिन्ने भिन्ने च वक्रिते । धूम्रे कृष्णेऽरुणे सूर्ये स्थायी जयति सर्वदा ॥९॥ भूबलानि समाप्यन्ते चतुरशीति संख्यया । यदाश्रय बलादाशु शत्रुश्रीः करगामिनी ॥१०॥ अब्देऽप्यब्दार्द्धमासे निज दल सहिते वासरे चैव यामे, यामस्यार्धे मुहूर्ते भ्रमति च घटिका तद्दशांशाष्टकेऽपि । संग्रामे

चातुरङ्गे कविरणखलके कोट युद्धे भटानां, निःसन्देहं जयार्थं नरपति गदितं भूबलं तच्च सारम् ॥ ११॥
इति भूबलाध्यायस्समाप्तम् ॥

अथ शान्त्यध्यायः ॥ अथ मृत्युञ्जय यन्त्रः ॥ पुनरन्यत्प्रवक्ष्यामि मन्त्र यन्त्रादिकं बलम्। यस्य प्रभावतो युद्धे दुर्बलस्य बलं भवेत् ॥१॥ चतुरस्रं चतुर्द्वारं त्रिरेखं पद्मगर्भितम्। हस्तत्रय प्रमाणं च तण्डुलैर्मण्डलं लिखेत् ॥२॥ सर्वलक्षण सम्पूर्णं सर्वावयव संयुतम्। मासु भूमि प्रवेशे च गोमयेनोपलेपिते ॥ पद्मपत्रे लिखेद्देवांश्चतुःषष्टि प्रमाणतः। एकैक पद्म पत्रेषु वसुसंख्या दले दले ॥३॥ भैरवी भैरवा सिद्धिर्ग्रहा नागा उपग्रहाः। पीठोपपीठसंयुक्ता दिक्पालैश्च समन्विता: ॥४॥ कर्णिकायां न्यसेद्देवं शिवं सांङ्ग सहस्रकम्। प्रणवादिनमोन्तैश्च नाममन्त्रैस्ततोऽर्चयेत् ॥५॥ मण्डलाग्रे लिखेत्पद्मं वीरं तत्र निवेशयेत्। तीर्थोदकान्वितैः कुम्भैः सदूर्वाक्षत पल्लवैः ॥६॥ मृत्युञ्जयेन मन्त्रेण शतवाराभिमन्त्रितैः। अभिषिञ्चेत्ततो वीरं शुभलग्ने स्वरोदयी ॥७॥ "ॐ जूं सः" इति मृत्युञ्जय मन्त्रः ॥ अभिषिक्तस्ततो वीरः संग्रामे विजयी भवेत्। शस्त्रैर्न भिद्यते तस्य शरीरं शत्रुचोदितैः ॥८॥ एतन्मण्डलमध्यस्थोऽभिषिक्तः पुरुषो यदा। ततः प्रभृति युद्धेषु शत्रुं जयति सर्वदा ॥९॥ राज्यभ्रष्टो लभेद्राज्यं क्षीणायुर्म्रियते न च। मुक्त्वा पीडां ग्रहाः सर्वे शान्तिं कुर्वन्ति सर्वदा ॥१०॥ इति अभिषेक विधिः।

अभिषेकात्परं पूजा कर्तव्या पूर्वमण्डले। मृत्युञ्जयेन मन्त्रेण पूर्वोक्त विधिनाततः ॥११॥ "ॐ जूं सः" पश्चात्समर्पयेन्मन्त्रं रणदीक्षा भवेदियम्। तया समन्वितो वीरस्त्रिदशैरपिदुर्जयः ॥१२॥ इति रणदीक्षा ॥ पूर्वोक्त मण्डलस्याग्रेऽथ शस्त्राणि विन्यसेत्। पूजयेद्विधिवत्तानि ततो जागरण क्रिया ॥१३॥ "ॐ खां खीं खूं खैं खौं खः रौद्रमूर्तये खड्गाय नमः" – इति खड्ग मन्त्रः ॥ "ॐ क्रां क्रीं क्रूं क्रैं क्रौं क्रः" ॐ भैरवरूपाय रक्षाप्रदाय फलकाय नमः। इति फलक मन्त्रः ॥ "ॐ लां लीं लूं लैं लौं लः

इन्द्रायुधाय धनुषे नमः ।"—इति धनुर्मन्त्रः ॥ "ॐ स्रां स्रीं स्रूं स्रैं स्रौं स्रः" ब्रह्मादि पञ्चदेवता मूर्तये पञ्च-
बाणाय नमः।"—इति पञ्चबाण मन्त्रः ॥ "ॐ क्रां क्रीं क्रूं क्रैं क्रौं क्रः शूलिनो मूर्तये भैरवायुधाय कुन्तायनमः।"
—इति कुन्तमन्त्रः ॥ "ॐ अघोरेश्वरि चामुण्डे महाचामुण्डे ध्रां ध्रीं ध्रूं ध्रैं ध्रौं ध्रः भगवतीमूर्तये कात्यायनी
छुरिकायै नमः।"—इति छुरिका मन्त्रः ॥ इति रणाङ्ग पूजा विधिः ॥

धागौ मातुल भागिनेयौ तद्रोम कृत डोरके। मृत्युञ्जयेन मन्त्रेणं दातव्यं ग्रन्थि सप्तकम्।
एवं कृत विधानेन जायते रण कङ्कणम्। दक्षहस्त प्रबद्धेन युद्धे च विजयी भवेत् ॥२॥ इति रण कङ्कणम् ॥
कर्पूरं कुंकुमं चैव गोरोचन समन्वितम्। कोकिलाक्षस्य लेखिन्या श्वेत वस्त्रे ऽति शोभने ॥३॥ ॐकार रूप
मध्यस्थे साध्यनाम पटे लिखेत्। तद्गर्भ हकारं च टकार परिवेष्टितम् ॥ ४॥ पृथ्वी सम्पुट मध्यस्थं
वर्गाष्टक युतं ततः। प्रणवाद्यरिनामेद हुंफडन्तं दिगष्टके ॥५॥ मन्त्रमेतं शतं जप्त्वा पट्टं तन्मूर्ध्नि बन्धये-
-त्। भीरुं नयति वीरत्वं समरे च जयप्रदम् ॥ ६॥ इति वीर पट्ट विधिः ॥ पूर्वोक्तेन विधानेन रणपट्टमितो
लिखेत्। कृत्वा हनुमतो रूपं हृदि मन्त्रममुं लिखेत् ॥ "ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हनुमते नमः"—
मन्त्रमध्ये लिखेन्नाम निजयोधस्य सम्भवम्। मूर्ध्नि बद्धेन तेनैव हनुमत्तुल्य विक्रमः ॥७॥ इति रण
पट्ट विधिः ॥ त्रिशूलं दक्षिणे हस्ते कपालं वामके तथा। भैरवं रूपं पूर्वद्रव्यैः समालिखेत्। त्रिपुराम-
न्त्रमाभ्यां ग्रंथनेन तु वेष्टयेत्। मूर्ध्नि बद्धेन तेनैव त्रैलोक्यं जयति ध्रुवम् ॥८॥ "ऐं क्लीं सौं त्रिपु-
-रायै नमः"—इति त्रिपुरामन्त्रः ॥ इति जय पट्ट विधिः ॥

कन्याकर्तित सूत्रेण अष्टोत्तर गुणेन च। कर्तव्यो दोरकस्तेन स ग्रन्थिः कटिमानतः ॥
मृत्युञ्जयेन मन्त्रेण ग्रन्थयो ऽष्टोत्तरं शतम्। कृत्वैवं मेखला जाता कटिबद्धारि नाशिनी ॥ "ॐ जूं सः"
इति मेखला मन्त्रः ॥ ब्रह्माणी कवचं कृत्वा यो योधः प्रविशेद्रणम्। प्रभवन्ति न तस्याङ्गे प्रहाराः शत्रुनो-

-दिताः ॥ इति कवचम् ॥ अनुलोमविलोमेन मन्त्रं मृत्युञ्जयं न्यसेत् । रक्षान्तं च षडङ्गेषु न्यासोऽयं शत्रु-
तारणः ॥ इति न्यासः ॥ रसना घटिका ग्रस्ता अङ्गुष्ठोनामिकातले । एतन्मुद्रा प्रभावेण संग्रामे विजयी
भवेत् ॥ इति मुद्रा ॥ अष्टोत्तर सहस्रं च अघोरं मन्त्रमुत्तमम् । जपयित्वा ततो घोरं मन्त्रराजमनुत्तमम् ॥
पूर्वोक्तैरेव च द्रव्यैर्भूर्जपत्रे सुशोभने । लिखेन्मृत्युञ्जयं मन्त्रं तन्मध्ये वीरनामकम् ॥ मृत्युञ्जयेन
मन्त्रेण ग्रथितं तच्च नामकम् । रक्षां कृत्वा करे बद्ध्वा संग्रामे विजयी भवेत् ॥ "ॐ जूं सः" इति रक्षा ॥
आरण्यफलकं मूलं पुष्यार्केण तु गृह्यते । कन्याकर्तित सूत्रेण शतघ्नेन तु दारकम् । ग्रन्थयेन्मृत्युञ्जयेन
प्रत्येकं च पृथक् पृथक् । अष्टोत्तरशतेनैव जायते वीरकङ्कणम् ॥ ९ ॥ "ॐ कुमारि अवतर अवतर
हरबाणगृहवासिनी त्रिपुरुषं सत्येन सर्वपुष्पं भञ्जय भञ्जय स्वाहा" इति मन्त्रः ॥ अङ्कसंस्थेन तेनैव
दुर्जयस्त्रिदशैरपि । स्तम्भयेत्सर्वशस्त्राणि सर्वशक्ति समन्वितः ॥ १० ॥ इति वीरकङ्कणम् ॥

अथौषधयः ॥ ईश्वरी ब्रह्मदण्डी च कुमारी वैष्णवी तथा । वाराही वज्रिणी चंडी
तथा रुद्रजटाभिधा ॥ ११ ॥ लाङ्गली सहदेवी च पाठा राजी पुनर्नवा । मुद्गरी भूतकेशी च सोमराजी
हनूजटा ॥ १२ ॥ श्वेतापराजिता गुञ्जा श्वेता च गिरिकर्णिका । क्षुद्रिका शङ्खिनी चैव विडङ्गी शरपुङ्खिका ॥
१३ ॥ खर्जूरी केतकी ताडी पूगी स्यान्नारिकेलिका । अर्जुनः काञ्चनारश्च चम्पकीऽश्मन्तकः कुहूः ॥ १४ ॥
अपामार्गोऽर्कभृङ्गौ च ब्रह्मवृक्षो वटस्तथा । शतमूली बलायुग्मं गोजिह्वोपलसारिका ॥ १५ ॥ अष्टलोहरसा
वज्रा हरिद्रा तालकं शिला । एताश्चौषधयो दिव्यं जयार्थं संग्रहेद् बुधः ॥ १६ ॥ सूर्येन्दुग्रहणे प्राप्ते
दीपोत्सवदिनत्रये । पुष्यमूलार्कयोगे च महानवमिवासरे ॥ १७ ॥ खादिरेण च कीलेन प्रोद्धरेत्ता महौषधीः
बलिपूजाविधानेन सर्वकर्मसु सिद्धिदाः ॥ १८ ॥

तत्र मन्त्रः ॥ येन त्वा खनते ब्रह्मा इन्द्रो विष्णुर्महेश्वरः । तेनाहं खनयिष्यामि तिष्ठ

तिष्ठ महौषधि ॥१९॥ तदोद्धृता कटीसूत्रं शिरःप्रभृतिषु स्थिता। त्रिदशैरप्यवध्योऽसौ युद्धे चैव चतुर्विधे
॥२०॥ इति यामले औषधयः॥

अथ तिलकम्॥ वज्री चण्डी च चक्री च त्रिशूली मुद्गरी तथा। देहस्था समरे पुंसां
सर्वायुध निवारिणी ॥२१॥ गृहीतं पुष्य नक्षत्रे अपामार्गस्य मूलकम्। लेपमात्रेण वीराणां सर्व शस्त्रनिवा
रणम् ॥२२॥ अञ्जनः काञ्चनारश्च चम्पकोऽश्मन्तकः कुटुः। लेपेन विजयी युद्धे वज्रदेहो भवेन्नरः॥
२३॥ खर्जूरी मुख मध्यस्था कटिबद्धा च केतकी। भुजदण्डस्थित स्तालः सर्वशस्त्र निवारणः॥२४॥ दक्ष
बाहुस्थित श्चार्को वामेन्दु हृदये धरा। रुद्रः पृष्ठस्थितो युद्धे वज्रदेहो भवेन्नरः॥२५॥ त्रिलोह वेष्टितं
कृत्वा रस वज्राभ्र संयुतम्। वक्त्रस्थं च करस्थं च सर्वायुध निवारणम् ॥२६॥ गिरिकर्णी शमी गुंजां
श्वेतवर्णां समाहरेत। चन्दनेनान्विताः सर्वास्तिलकेन जयी रणे ॥२७॥ अधःपुष्पी शिखा चैव
श्वेता च गिरि कर्णिका। गोरोचन समायुक्तं तिलकं शत्रुमोहनम् ॥२८॥ कनकार्क वटो वह्निः षंडि
न्दुः पंचमस्तथा। करोति तिलकं यस्तु पश्येत्तं पञ्चधा रिपुः ॥२९॥ कृष्णसर्पकपाले तु चितामृ-
त्तिकयान्वितम्। सितगुञ्जां वपेत्तत्र तस्या मूलं समाहरेत ॥३०॥ कृततिलकं भटं दृष्ट्वा पश्येत्स्वं
श्वावृतं रिपुः। श्वगणैर्भक्ष्यमाणं तु पतितं च ततो भुवि ॥३१॥ छाया यस्य जले जाति संग्राह्यः
कासमर्दकः। अनेन तिलकेनारिः कूपं वापीं प्रपश्यति ॥३२॥ इति तिलकम्॥

अथ ढक्का॥ ब्रह्मदण्डी च कौमारी ईश्वरी वैष्णवी तथा। वाराही वज्रिणी
चण्डी महालक्ष्मीस्तथैव च ॥३३॥ एताश्चौषधयो दिव्यास्तथैता मातरः स्मृताः। हृदि गुल्के करे बद्धाः
सर्वशस्त्र निवारिकाः ॥३४॥ इति ढक्का॥

अथ वज्राङ्ग सुन्दरी गुटिका॥. बङ्ग सीसक शुल्वाभ्र हेमतार समन्वितैः। वज्राय-

-स्वादिभिर्युक्तः क्रियते पारदो रसः ॥३५॥ वज्राणां द्रावणं वक्ष्ये पारदस्य च बन्धनम् । लघुद्रावं च लोहेषु संयोगार्थं परस्परम् ॥३६॥ अस्थि शृंखल मध्यस्थं कृत्वा वज्रं निरुन्धितम् । जलभाण्डे विनिक्षिप्य स्वेदयेद्दिन सप्तकम् ॥३७॥ वज्रिकारससंघृष्टं नष्टविषं तु पारदम् । ठिक्का कन्दस्य मध्यस्थं बन्धनार्थं ततः पुटे ॥३८॥ रेतितं लोहचूर्णं तु टङ्कणेन तु भावितम् । लघुद्रावि भवेदेवं ताम्रपात्रे न संशयः ॥३९॥ सर्वांस्तानेकतः कृत्वा मुखमध्यस्थिता भवेत् । गुटिका जायते रम्या नाम्नी वज्राङ्गसुन्दरी ॥४०॥ मुखस्था सिद्धिदा प्रोक्ता जरामृत्युविनाशिनी । संग्रामे विजयी वीरो वज्रदेहो महाबलः ॥४१॥ सर्वलोकप्रियो नित्यं नारीणां वल्लभस्तथा । गुटिकेयं समाख्याता यथोक्ता ब्रह्मयामले ॥४२॥ इति गुटिका॥

अथ सिंही ॥ सिंही व्याघ्री मृगी हंसी चतुर्थैवं कपर्दिका । एतासां लक्षणं वक्ष्ये प्रभावं च यथाक्रमम् ॥१॥ सिंही सुवर्ण वर्णा च व्याघ्री धूम्रा सरेखिका । मृगी तत्र विजानीयात्पीत कृष्णा सितोदरी ॥२॥ हंसी जलतरा श्वेता विदन्ता नातिदीर्घिका । एवं विशेषान्विज्ञाय ततः कर्म समाचरेत् ॥३॥ औषधी सिंहिका नाम तस्य मूलस्य यो रसः । सिंही कपर्दिका मध्ये क्षेप्य स्तन्मूलसंपुतः ॥४॥ पिधाय वदनं तस्याः सिक्थेन च समन्वितः । अस्यां वक्त्रस्थितायां तु सिंहवज्जायते नरः ॥५॥ मदोन्मत्ता गजास्तस्य दर्शनेन पराङ्मुखाः । रणे राजबले द्यूते विवादे चापराजितः ॥६॥ इति सिंही ॥ अथ व्याघ्री ॥ व्याघ्रीरसेन संघृष्टः पारदो मूल संपुतः । सर्ववत्साधयेद्व्याघ्रीं फलं चैव तथा विधम् ॥७॥ इति व्याघ्री ॥ अथ मृगी ॥ मृगसूत्रेण सम्भिन्ना मृत्तिका रस संपुता । मृगधिष्ण्ये क्षिपेन्मृग्यां तस्याः फलमतः शृणु ॥८॥ मुखमध्ये स्थितायां च वशी भवति मानवः । रतिकाले मुखस्थायां बालाप्राणहरो नरः ॥९॥ इति मृगी ॥ अथ हंसी ॥ हंसपादी रसैर्घृष्टः पारदो मूल संपुतः । हंसीमध्ये क्षिपेद्धीमान् मुखस्था सर्वसिद्धिदा ॥१०॥

ग्रहाः पीडां न कुर्वन्ति दुष्टारिष्टं तथैव च। स्थावरं जङ्गमं चैव विषं नश्यति तत्क्षणात् ।।११।।इति हंसी। इति कपर्दिका समाप्ता।।

अथ योगधारित शस्त्राणि ।। अपामार्ग रसैनैव यानि शस्त्राणि लेपयेत्। जायन्ते तानि संग्रामे वज्रसाराणि निश्चितम् ।।१।। इति शस्त्र रक्षा।। अथ शस्त्रमोटनम्।। विद्युत्पातमृतास्थीनि पेषयेत्करकांबुना। अनेन लेपनं कुर्यात् संनाहफलकेपिवा।।१।। तत्र लग्नानि शस्त्राणि त्रुटन्ति च नमन्ति च। न भिन्दन्ति शरीराणि पुष्पाणीव मृदूनि च।।२।। इति शस्त्रमोटनम्।। अथशस्त्रलेपः कृष्णसर्पशिरांस्यष्टौ विषं पञ्चपलानि च। छुछुन्दरीवसाष्टौ च तथा च गृहगोधिका।।१।। कृष्णस्य वृश्चिकस्याष्टौ कपिकच्छूः पलाष्टकम्। द्वे पले हरितालस्य कृकलासरसः पलम् ।।२।। लाङ्गलीकरवीराभ्यां त्रीणि त्रीणि प्रकीर्तिताः। एतेषां शोधितं कल्कं भल्लातक समायुतम् ।।३।। सर्वेषामेव शस्त्राणां लेपोऽयं समुदाहृतः। विद्धान्तु तैर्ये मनुजास्त्यजन्ते जीवितं ध्रुवम् ।।४।। रक्तकञ्चुकया नारी रक्तप्रावरणा च या। नरदारुसमायुक्ता पर्वतानपि साधयेत् ।।५।। गृहीत्वा मक्षिकां नीलां षड्विन्दुकीटकान्विताम्। शस्त्रलेपेन घाताद्वि जायन्ते कीटका व्रणे।।६।। इति शस्त्र लेपः।

अथ पैच्छिक विधि ।।षड्विंशत्या चतुःषष्ठ्या शतेनाष्टोत्तरेण वा। मयूरोलूकपक्षाणां तन्मानं गुंफिपिच्छिका।।१।। ग्रहणे मुष्टिपर्यन्तं रक्तसूत्रेण वेष्टयेत्। इष्टमन्त्रं जपेत्सत्यं सिद्धं रणेऽरिनाशनम्।।२।। विसर्गे मूलजातेन गच्छ गच्छ परं ध्रुवम्। सर्वोच्चस्थानगो धीरः स्वसैन्यविजयावहः।।पैच्छिकस्य विधिश्चायं ब्रह्मयामल भाषितः।। ३।। इति पैच्छिक विधिः।। अथ तान्त्रिक विधिः लाङ्गली ब्रह्मदण्डी च कृष्णोन्मत्तरसान्विता। मर्दयित्वाविकं चर्म पश्चाद्यन्त्रं समालिखेत्।।१।। काक रक्तं तथा विष्ठा चिताङ्गारहलाहलम्। काकपिच्छस्य लेखिन्या लिखेद्यन्त्रं यमर्गलम ।।२।। मदनबीजस्य मध्यस्थं शत्रुनाम ससैन्यकम्।

बाह्ये तु वायुबीजेन वेष्टयेत्त्रिगुणं पुनः ॥३॥ वायुमण्डलगं कृत्वा वायुबीजेन रञ्जिकाम् । द्वादशस्वरसंपु-
क्तं वेष्टयेत्सव्यमार्गतः ॥४॥ ताम्रकस्यास्य नादेन व्याकुलीभूतमानसाः । बलं मुक्त्वा महावीराः पला-
यन्ते महारणात् ॥५॥ इति ताम्रक विधिः ॥ अथ काहल विधिः ॥ हेमायस्त्रपुरोत्थाणां समैर्भागैस्ततः
पुनः । द्वादशाङ्गुलेन ताम्रेण कारयेज्जय काहलम् ॥१॥ काहलीं रससंलिप्तां वादयेत्तां रणाङ्गणे । श्रुत्वा नादं पुण
प्रयान्ति बलिष्ठा अपि शत्रवः ॥२॥ इति काहल विधिः ॥ अथ ढक्का विधिः ॥ ताम्रकस्य विधानं तु ढक्का
यामपि कारयेत् । तथैव फलमप्युक्तं समराङ्गण भूमिषु ॥१॥ इति ढक्का विधिः ॥ अथ मुरज विधिः ॥
तुम्बिनी चित्रकं दण्डी कृष्णोन्मत्त रसान्विता । मार्जयेन्मौरजं चर्म सप्तवारान्पुटद्वयम् ॥१॥ दण्डीस-
-चित्रका दन्ती लज्जालु रससंयुता । पुटे विमर्दयेत्तेन जायते वाद्य भाजनम् ॥२॥ ब्राह्मी जाती कुमारी
च विष्णुद्रुम भस्मोदकान्विता । इष्टमन्त्राभिजप्तं तु जयार्थं वाद्यभाजनम् ॥३॥ इति मुरज विधिः ॥

अथ भस्माधानम् ॥ अग्निहोत्रश्मशानान्त्य जातिगेह समुद्भवम् । भस्मत्रितय
मादाय कर्तव्यं तस्य कुट्टनम् ॥१॥ इन्द्रवृक्षमयं कार्यं मुसलोलूखलादिकम् । चतुरस्रे सपद्मे च
द्वारहीने च मण्डले ॥२॥ स्थापयित्वोलूखले तत्र कुर्युस्तद्भस्मकुट्टनम् । चतुर्वर्णोद्भवाः कन्याश्चतुः
षष्टि प्रमाणतः ॥३॥ चतुर्विंशति संख्या वा रासगीतेन संयुतम् । तं रासं सम्प्रवक्ष्यामि सर्वमन्त्रमयं
शुभम् ॥४॥ "ॐ कालउकुरुरुकु सुसुहयंत डुडुसुत्ति डवं भराडभक्षिपक्करेत्त किं एहा एहिं किं पिछ
एहिं मडइ सुगुड सुगुड एहाएहं" — इति रासगीतम् ॥ एतद् भस्म कृतां रेखां लंघयन्ति न वैरिणः
क्षिप्यते च रिपोः सैन्यं भङ्गमायाति तत्क्षणम् ॥१॥ इति भस्माधानम् ॥ मारणे मोहने स्तम्भे
विद्वेषोच्चाटने वशे । एकं यमार्गलं यन्त्रभेदेन बहुधा स्थितम् ॥

अथ द्वादशार चक्रम् ॥ द्वादशारं लिखेच्चक्रं वृत्तत्रय विभूषितम् । उष्ट्रीमन्त्रं

च तद्बाह्ये यमश्लोकं च मध्यतः । "ॐ ह्रीं ष्त्रीं विकटदंष्ट्रानने हुं फट् ।" उच्छिष्टमन्त्रमिमञ्जाप्तं दश
साहस्र संख्यया । मध्वाज्याक्तै रक्तपुष्पैः सहस्रं होमयेत्ततः ॥१॥ ततः सिद्धो भवेन्मन्त्रो यथेप्सितफलप्रदः।
यस्य प्रभावमात्रेण शत्रवो यान्ति संक्षयम् ॥२॥ इत्युक्ती ॥ अथ यमश्लोकः ॥ "यमराजस्य पद्यं तु
प्रोच्यमानं मया शृणु । यमराजसदो मेय यमेदारुणयोदयः ॥ यदयो निरयो क्षेपयक्षे यक्ष निरामयः" ॥३॥
इति यमश्लोकः ॥ इमं यम श्लोकं द्वात्रिंशत्सहस्राणि जपेत् । घृतमधुररक्तपुष्पैः सहस्रकं होमयेत्।
ततः सिद्धो भवति । मनसेप्सितानि कार्याणि करोति ॥ इति॥

अथ मारण विधिः ॥ चिताङ्गारं विषं रक्तो कृष्णोन्मत्तरसस्तथा । एतैर्नराख्यि
लेखिन्या यन्त्रं प्रेतपटे लिखेत् ॥१॥ साध्यनाम च तन्मध्ये हूं च राजिकया कृतम् । यमरूपमिदं
साक्षान्महिषासनगं कुरु ॥२॥ कृष्णाष्टम्यां चतुर्दश्यां गन्तव्यं पितृमन्दिरे । नग्नो मुक्तशिखो भूत्वा
मद्यमांसैः प्रपूजयेत् ॥३॥ क्षिप्तोच्छिष्टशरावेषु कृष्णसूत्रेण वेष्टयेत् । श्मशानभूमिमध्यस्थः सप्ताहा-
न्मारयेद्रिपुम् ॥४॥ इति मारणविधिः ॥ अथ मोहनविधिः । रोचनां कुङ्कुमं चन्द्रं कृष्णोन्मत्तरसान्वि
तम् । रोहितोद्भव लेखिन्या भूर्जपत्रे लिखेदिदम् ॥१॥ साध्यनाम च तद्गर्भे बाह्ये चैकाररञ्जिका
त्रालि मण्डलगं कृत्वा रक्तसूत्रेण वेष्टयेत् ॥२॥ सिक्थकेनावृतं कृत्वा सुराकुम्भे विनिक्षिपेत् । पूजयेद्र-
क्तपुष्पैश्च सप्ताहान्मोहयेद् ध्रुवम् ॥३॥ इति मोहन विधिः ॥ अथ स्तम्भनम् ॥ शिलातालहरि-
द्राश्च मेषमूत्रसमन्विताः । कोकिलाक्षस्य लेखिन्या नीलरक्तपटे लिखेत् ॥१॥ साध्यनाम च तन्म-
-ध्ये रञ्जकाक्तं निवेशयेत् । पर्वताकृति यन्त्रं च शिलातल निवेशितम् ॥२॥ पूजयेत्पीतपुष्पैस्तु
कुंकुमेन च वा पुनः । स्तंभनं देहमनसोः सप्ताहाज्जायते रिपोः ॥३॥ इति स्तम्भनम् ॥

अथ विद्वेषण विधिः ॥ काकविड् विषरक्तेन शवध्वजपुटे शुभे । काकपक्षस्य

लेखिन्या लिखेद्यन्त्रं स्वरोदयी॥ १॥ साध्यनाम लिखेत्तत्र चतुष्कोणेषु मध्यगम्। सविसर्ग खकारेण त्रिरुच्चारेण रञ्जिका॥२॥ उष्ट्रीरुधं कृतं यन्त्रं बद्धं काकगले ततः। सयन्त्रे वायसे मुक्ते ततस्तूच्चाटनं भवेत्॥३॥ इति उच्चाटन विधिः॥ अथ वशीकरण विधिः॥ कालेयरोचना चन्द्रैर्लज्जालुगजवारिभिः। मदनोद्भव लेखिन्या यन्त्रं भूर्जे लिखेदिदम्॥१॥ साध्यनाम च तन्मध्ये क्लीङ्कारं रञ्जिकान्वितम्। नराकृति कृतं यन्त्रं सिक्थकेन च वेष्टयेत्॥२॥ त्रिमधुरे स्थापितं च रक्तपुष्पैश्च पूजितम्। सप्तरात्रेण तद्यन्त्रं वशीकरणमुत्तमम्॥३॥ इति वशीकरण विधिः॥

एवं सर्वेषु कार्येषु विधियुक्तं तु कारयेत्। ततस्तु सिध्यन्ते यन्त्र सत्य सत्य न संशयः॥१॥ हनूमन्तं कालरात्रिं महामारीं खगाधिपम्। भैरवं क्षेत्रपालं च फणीन्द्रं गणनायकम्॥२॥ पताकायां लिखेदेतदष्टकं पूर्वसूचितम्। ततः सारतरं ज्ञात्वा प्रथमं विस्तराद्वदेत्॥३॥ आरण्यपलहीतूलं संगृहीतं शुभे दिने। कन्याकर्तित सूत्रेण दिते वस्त्रं विनिर्मितम्॥४॥ सार्धहस्तत्रयं श्वेतं शोधं तत्र प्रदापयेत्। हरिद्रा हरितालेन शैलेयसंयुतेन वा॥५॥ लिखेद्धनुमतोरूपं पञ्चत्र्यङ्गुलमानकम्। दीर्घदन्तं करालाङ्गं दीर्घबाहुनखान्वितम्॥६॥ वामहस्ते ध्वजं कुर्याद्दक्षिणे मेरुपर्वतम्। वद्धकुम्भं महारौद्रं जिह्वालाङ्गूल लोलितम्॥७॥ रक्तवस्त्रं सकौपीनं शिखा मुकुटधारिणम्। हृत्पद्मे विन्यसेत्तस्य निजनामक्षरनामकम्॥८॥ हनूमतो लिखेत्तत्र मूलमन्त्रं दलाष्टके। मालामन्त्रेण तद्बाह्ये सव्यमार्गेण वेष्टयेत्॥९॥ "ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हनूमते ऽयं मूलमन्त्रः।

ॐ वज्रकाय वज्रतुण्ड कपिल पिंगल ऊर्ध्वकेश महाबलपराक्रम रक्तमुखतडिज्जिह्व महादंष्ट्रोत्कट कटकटी कपालिन् महादृढप्रहार लङ्केश्वर महासेतुबंधन शैलप्रवाह गगनचर एह्येहि भगवन्शतसहस्रसूर्यसमान रूप भैरवाज्ञापयेति एह्येहि दीर्घलाङ्गूलेन अमुक शत्रुं वेष्टय वेष्टय

मञ्जय मञ्जय खं खं रे रे हुं फट्॥ इति माला मन्त्रः समाप्तः ॥

अथ हनुमत्पताका ॥ गात्रेषु दापयेद्रेफैश्चतुष्षष्टि प्रमाणकैः। षड्वर्णान्विन्यसे-च्चापि रसनाग्रे द्विरेखया ॥१॥ स्तम्भिनी मोहिनी चैव शोधिनी भञ्जिनी तथा। गात्रेषु विन्यसेद्देवी प्रणवादिनमोऽन्तगाः ॥२॥ लकारं पर्वते दद्यात्पुच्छदण्डे बुकारकम्। जुकारं मुखमध्यस्थं हुङ्कारं चतदग्रतः ॥३॥ वदने मस्तके गुह्ये मूलमन्त्रं न्यसेद् बुधः। लांगूले मातृकां वापि क्षादिकान्प्रणवादिकम् ॥४॥ मस्तकोपरि कर्तव्या मातरो गृट संपुताः। अष्टम्यां च चतुर्दश्यां प्रतिष्ठां कारयेत्ततः ॥५॥ सुपर्वे चैव नक्षत्रे चन्द्रताराबलान्विते। रक्ताम्बरधरो मन्त्री रक्तगन्धानुलेपनः ॥६॥ रक्तपुष्पकृताटोपः सम्यक्प्रस-न्नहृद्विग्रहः। उद्धरेद्रक्षतैः पद्ममष्टपत्रं सुशोभनम् ॥७॥ स्तम्भिनी मोहिनी चैव शोधिनी भञ्जिनी तथा। पूर्वादितश्चतुर्दिक्षु क्रमाद्देवीं निवेशयेत् ॥८॥ उड्डीयानादिकान् पीठान् स्थापयेदीशकोणतः। भैरवीं भैरवां सिद्धिं गुहा नागा दिशाधिपाः ॥९॥ प्रत्येकं क्रमयोगेन न्यसेत्पत्राष्टके बुधः। पूजा चैव क्रमेणैव कर्तव्या स्वरमण्डले ॥१०॥ नानाप्रकारशोभाढ्ये कर्पूरागरुवासिते। चन्द्रोदयकृताटोपे ध्वजाष्टकविभूषिते ॥११॥ मण्डलस्यास्य मध्ये तु कुर्यादूर्ध्वं ततः पटम्। स्नापयेत् पञ्चगव्येन दर्पणो-दरमध्यगम् ॥१२॥ अग्निमारुतबीजेन विदध्यादासनं ततः। मूलमन्त्रेन्यसेन्मूर्ध्नि हनुदेवस्य मा-न्त्रिकः ॥१३॥ "ॐ हौं हूं हनुमते नमः" इति मूलमन्त्रः ॥ अङ्गेषु विन्यसेदस्य षट्स्वरान् दीर्घसंज्ञका-न्। ककारादिक्षकारान्तान् स्तम्भिन्यादिषु विन्यसेत् ॥१४॥ पञ्चोपचारमिश्रैश्च मद्यमांसाशनैस्त-तः। प्रजपेत्सकलान्देवान् प्रणवादिनमोन्तकान् ॥१५॥ पूजां कृत्वा विधानेन ध्यानं कृत्वा विचक्षणः। सुशोभनप्रयोगेण सिद्धिर्भवति सर्वदा ॥१६॥ विचित्रवस्त्रसंयुक्तं बाह्याभरणभूषितम्। रक्तवस्त्रं महाभीमं सर्वलोकभयङ्करम् ॥१७॥ ध्यानं लक्षं जपेत्तस्य मूलमन्त्रं नवाक्षरम्। मध्वाज्यरक्तपुष्पै

यच्च होमं कृत्वा दशांशतः ॥१८॥ कुमारीभोजयेत्तत्र चतुष्षष्टिप्रमाणतः । आचार्यं दक्षिणां दद्यान्नगरं ग्रामं खेटकम् ॥ १९॥ काष्ठपाषाणधातूनां पूजा या निर्मितापि च । प्रतिष्ठा क्रियते तत्र देशे ग्रामे पुरेऽपिवा ॥२०॥ न दुर्भिक्षं भवेत्तत्र न च व्याधिभयं भवेत् । परचक्रागमो नैव व्याधिभिश्च न पीड्यते ॥ २१॥ न पतत्यशनिस्तत्र न च रोगभयं भवेत् । डाकिनी भूत बेताला: पिशाचोरगराक्षसा: ॥२२॥ हनूमतः प्रभावेण विषपीडा न जायते । हनूमतः पताकेयं गजाश्वोपरि संस्थिता ॥ २३॥ धारिता सा प्रयत्नेन रिपुसैन्यस्य सन्मुखी । हनूमतः पताकेयं गजाश्वादीन् पराक्रमेत् ॥२४॥ तस्या दर्शनमात्रेण व्याकुलीभूत मानसा: । नश्यन्ति रिपवस्तस्य सिंहस्येव यथा मृगा: ॥२५॥ इति हनुमत्पताका: ॥

अथ हनुमद्रक्षाविधि: ॥ अथ रक्षां प्रवक्ष्यामि सर्वसिद्धि प्रदायिकाम् । स्तम्भिनी शत्रुसैन्यस्य भूभुजादिवशङ्करीम् ॥१॥ रोचना कुङ्कुमाभ्यां च भूर्जपत्रे सुशोभने ॥२॥ सुवर्णमयि लेखिन्यां पद्ममष्टदलं लिखेत् । साध्यनाम च तन्मध्ये मूलमन्त्रं दलाष्टके ॥३॥ मालामन्त्रश्च तद्बाह्ये त्रिधा ह्रींकारवेष्टितम् । त्रिलोह वेष्टितं कृत्वा कटि बाहु शिर: स्थितम् ॥४॥ धारयेद्यस्त्विमां रक्षां तस्य विघ्नं न जायते । रणे राजकुले द्यूते व्यवहारे पराजये ॥५॥ शस्त्रं नाक्रमते तस्य वज्रदेहो महाबल: । उपसर्गादि दोषेषु विषे स्थावर जङ्गमे ॥६॥ न भयं विद्यते तस्य स्त्रीणां चैवातिवल्लभ: । तस्य पीडां न कुर्वन्ति ग्रहाश्चैव उपगता: ॥७॥ न तेषां दुष्कृतं किञ्चिन्न भयं तस्य विद्यते । जलजाग्नि भयं नास्ति वायु तस्करजं भयम् ॥८॥ ज्वरा: सर्वे प्रणश्यन्ति त्र्याहिकाद्या विशेषत: । इयं हनुमतो रक्षा सर्वोपद्रवनाशिनी ॥ ९॥ इति रक्षाविधि:

अथ हनुमत्पिच्छकविधि: ॥ पिच्छाकारं पटं कृत्वा पातकावद्विधानत: । चन्द्रार्कग्रहणे प्राप्ते हनुमन्तं लिखेत्तत: ॥१॥ मातृकायां जपेत्तत्र यावन्मुक्ति: प्रजायते । होमयेच्च दशांशेन तिलसर्षपकादिभि: ॥२॥ युद्धकाले च तत्पिच्छं गजाश्वोपरि संस्थितम् । दर्शनं शत्रुसैन्यस्य भङ्गो भवति निश्चि-

-तम् ॥३॥ इति हनुमत्पिच्छक विधिः॥ अथ हनुमन्मन्त्र होमविधिः॥ मदनेन हनुं कृत्वा पूर्वलक्षणलक्षितम्। वर्तितं चैव लाङ्गूलं कारयेत्साधकेश्वरः॥१॥ परचक्रस्य ये मुख्या लांगूलस्यानुकारिणः। गजाश्वरथयाना-नि बहिःस्थानि तु कारयेत॥२॥ पूर्वमन्त्राक्षरैर्मेध्यं लांगूलेन तु वेष्टयेत्। वेष्टयेत्प्रतिमां सर्वामापाद तलमूर्धजाम्॥३॥ स्थापयेत् पूर्वविधिना परचक्रस्य संमुखम्। दर्शनात् परचक्रस्य भङ्गमायाति तत्क्षणात॥४॥ अथवा होमयेत्तत्र लाङ्गली लवणं विषम्। राजिका तुषि केशास्थि त्र्यूषणं निम्बमेव च॥५॥ षट्कोणकुण्डमध्ये तु निम्बास्य चित्रकोद्भवाः। समिधो ज्वालयेत्तत्र नैर्ऋत्याभिमुखे स्थितः॥६॥ होमयेद्धनुमन्त्रेण सहस्रैकं दिने दिने। दिन सप्तक मध्ये तु शत्रो पीडा ततो भवेत्॥७॥ अङ्गदाहा महापीडा विस्फोटो गन्धलूतिका। म्रियते नात्र सन्देहः संग्रामं कुरुते यदि॥८॥ इति होमविधिः॥

अथ मण्डूक यन्त्र विधिः॥ मालामन्त्रं पठेद्यस्तु हनूमतो रणाङ्गणे। तस्याङ्गं वज्रव-द्युद्धे हनूतुल्य पराक्रमम्॥१॥ "ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः" इति माला मन्त्रः॥ पुनरन्यत्प्रवक्ष्यामि येन्त्रं परमदुर्लभम्। माण्डूकं नाम विख्यातं सर्वशास्त्रेषु गोपितम्॥१॥ आनयेन्निर्व्रणं शुद्धं भूर्जपत्रं सुशो-भनम्। तस्मिंस्तु खररक्तेन वामकर्णोद्भवेन तु॥२॥ चिताङ्गारविभैर्युक्तं कृष्णोन्मत्तरसेन च। कुलिके विलिखेद्यन्त्रं नैर्ऋत्याभिमुखस्थितः॥३॥ प्रेतवच्चिन्तयेत साध्यं मुक्तकेशं विवस्त्रकम्। पुट्टापुट्टैः कृतं यन्त्रं कृत्वा मध्येऽरिनामकम्॥४॥ तन्नाम रेखयाभिन्द्यात्कोपाविष्टस्तु साधकः। पीडयित्वा तु यन्त्रं तु शालूरस्य मुखे क्षिपेत॥५॥ कीलयेत् पुष्टलोहेन शल्पकाण्डमयेन वा। आतपे दारनालं च सप्तगेहोद्भवं ततः॥६॥ तन्मध्ये दर्दुरं क्षिप्त्वा तद् भाण्डं मुद्रयेत्ततः। तापयेद्युद्ध कालेपि चिताङ्गारान-लोपरि॥७॥ गात्र स्तम्भो मनः स्तम्भो वायुपीडा तथोदरे। म्रियतेऽरिर्न सन्देहो यदि शक्रसमो रणे॥८॥ इति मण्डूक यन्त्र विधिः॥

अथ स्तम्भन यन्त्र विधिः ॥ शिला ताल हरिद्राभिरर्कपत्रेयुगे लिखेत्। कोकिलाक्ष-
स्य लेखिन्या स्तम्भान्तं रिपुनामकम् ॥१॥ त्रिठकारैः समावेष्ट्य तद्बाह्ये पार्थिवं पुरम्। वज्राष्टक
समोपेतं रेखा षोडश दीपितम् ॥२॥ माया बीजेन संवेष्ट्य त्रिधाङ्कुशनिरोधितम्। तन्मन्त्रं योजयि-
त्वा तु कण्टकैः कीलयेत्ततः ॥३॥ क्षिपेद्वल्मीक मध्ये तु पाषाणेस्तत्र पूरयेत्। पश्चात्समारभेद्युद्धं
विवादं साध्य साधकः ॥४॥ गात्रस्तम्भो भवेदेवं मनःस्तम्भस्तथैव च। जिह्वास्तम्भो विवादे च
साध्यो ऽसौ जायते ध्रुवम् ॥५॥ इति स्तम्भन यन्त्र विधिः ॥ अथ शत्रुभङ्ग विधिः ॥ अर्कपत्र युगे
नाम चिताङ्गारेण वेष्टयेत्। पूर्ववत्कीलयेत् पश्चाच्छिलयाच्छादयेद् दृढम् ॥१॥ एत मन्त्र प्रभावेण
मनोभङ्गो भवेत् पुनः। अथ प्रविश्य संग्रामे क्षिपतेऽरिर्न संशयः ॥२॥ इति शत्रुभङ्ग विधिः ॥

अथ कलिकुण्डल यन्त्र विधिः ॥ रेफयुक्तं हकारं च वषट्स्वर विभूषितम्। आत्-
नामोदरे कृत्वा ह्रीङ्कारं रेफ संपुतम् ॥ नाद बिन्दु समायुक्तंमोङ्कारं सम्पुटे स्थितम् ॥१॥ दिक्षु वज्राष्ट
सम्भिन्नं षोडशास्वर वेष्टितम्। वज्राग्रेषु च सर्वेषु मूल मन्त्रं यथेप्सितम् ॥२॥ आदि बीजोदरे
नाम दत्त्वा तस्य परिस्फुटम्। लिखित्वा वेष्टितं सर्वं मायया वेष्टितं त्रिधा ॥३॥ कलिकुण्डलदण्डाख्यं
यन्त्रं विघ्न विनाशनम्। श्वेताम्बरधरो मन्त्री शुभध्यान परायणः ॥४॥ उत्तराभिमुखो भूत्वा लिखेद्यन्त्रं
शुभोदये। कांस्य भाजन मध्ये तु चन्दनेन सुगन्धिना ॥५॥ लिखेद्दर्भस्य लेखिन्या मुष्टित्रय प्रमाणतः
सुगन्धि कुसुमैः श्वेतैरष्टोत्तर शतेन च ॥६॥ अर्चयेद्विधिवद्यन्त्रं फलं यावद्दिने दिने। लिखितं
पूजितं चैव प्रक्षालयेज्जलेन तम् ॥७॥ तज्जलं पीतमात्रं तु परविद्याविनाशनम्। शाकिनी भूत वेतालाः
पिशाचोरग राक्षसाः ॥८॥ भवन्ति निष्प्रभाः सर्वे यन्त्रस्यास्य प्रभावतः। शूलं विष्टम्भिकाजीर्णं
लूता विस्फोटकादयः ॥९॥ अभिचार कृता दोषा विषं स्थावर जङ्गमम्। गर्भे च वेदना यस्या मूढ

गर्भस्तु यो भवेत् । २०॥ एवं रोगैस्तु दुःखार्ता स्वस्थाः स्युः सर्वजन्तवः । वन्ध्यापि लभते पुत्रं मृतव-
त्सा च जीवसूः ॥२१॥ दुर्भगा सुभगा चैव यन्त्रस्यास्य प्रभावतः । कृत्याः प्रशमनं यान्ति मारुतश्ले-
ष्मपैत्तिकाः ॥ २२॥ जीर्णज्वराश्च विषमाः शीतदाहज्वरात्मकाः । एवमप्यास्थितं यन्त्रं करोति विपु-
लां श्रियम् ॥ २३॥ इति कलिकुण्डल यन्त्र विधिः ॥

अथ मृत्युञ्जय नाम यन्त्र विधिः ॥ शान्त्यर्थं निजनाथस्य जयार्थं रणकांक्षिणाम् ।
यन्त्रं मृत्युञ्जयं नाम प्रवक्ष्यामि समासतः ॥१॥ हंसमध्यगतं नाम मृत्युञ्जयपुटीकृतम् । रक्षरक्ष
समायुक्तं बाह्येरेखात्रया वृतम् ॥२॥ चवर्गस्य तृतीयो यो बिन्दु षट् स्वर भूषितः । हायन्तः सविसर्गश्च
मन्त्रोऽयं प्रणवादिकः ॥३॥ पद्ममष्टदलं बाह्ये जम्भाद्या दिग्दले स्थिताः । विदिक्षु प्रणवं न्यस्य पत्रं
षोडशकं बहिः ॥४॥ स्वराः षोडश दातव्याः प्रत्येकं सर्वतो दिशि । द्वात्रिंशत्पत्रकं पद्मं तद्बाह्ये विनि-
वेशयेत् ॥५॥ कादि युक्तौ हसौ वर्णौ स्थापयेत्क्रमशस्ततः । चतुष्षष्टि दलं बाह्ये भैरवांस्ततो लिखेत्
॥६॥ भैरवी भैरवा सिद्धिर्गुहा नागा दिशाधिपाः । पीठोपपीठ संयुक्तं क्षेत्रपालादि रष्टकम् ॥७॥ आनयेन्निर्व्रणं
भूर्जं ग्रन्थि हीनं सुशोभनम् । वर्णभेदेन संगृह्य ब्राह्मणादि क्रमेण च ॥८॥ ककारादित्रिद्रव्येण गोङ्कारस्य
त्रयेण च । षट्द्रव्यैर्यन्त्रमालिख्य साध्यनाम समन्वितम् ॥ ९॥ सुवर्णमयलेखिन्या उत्तराभिमुखं निशि ।
चन्द्रवारे लिखेद्यन्त्रं मृत्युञ्जयविधानकम् ॥१०॥ अनेन मदनस्थेन कृत्वा लिङ्गं सुशोभनम् । पञ्चामृतेन
दिव्येन स्नापयेत् सप्तवासरान् ॥११॥ पश्चाच्च भक्तकं देयं लक्षैकमयुतं ततः । साध्यनामयुतं मन्त्रं
रक्षार्थमुद्धरेत्ततः ॥१२॥ पूजयेच्छ्वेतपुष्पैश्च कर्पूरागरुचन्दनैः । छादयेत्पट्टवस्त्रेण सप्ताहाच्छान्तिकं भवेत् ॥
॥१३॥ मधवाज्यं गुग्गुलं तालश्रीपर्णीः सप्तासर्षपैः । पद्माकारेण कुण्डेन होमं कुर्याद्दशांशतः ॥१४॥ शमी
दूर्वासमिद्भिश्च रुद्राशाभिमुखस्थितः । मुद्रां च खेचरीं बद्ध्वा स्वाहान्तं होमयेत्ततः ॥१५॥ मुच्यन्ते

रोगिणो रोगात् पापात्मा विवर्जितः । त्यक्त्वा पीडां ग्रहाः क्रूराः सौम्यतां याति नान्यथा ॥१६॥ शाकिनी भूत
वेतालाः पिशाचोरग राक्षसाः । ज्वरास्तस्य प्रणश्यन्ति त्र्याहिकैकान्तरादिकाः ॥१७॥ विषं नाक्रमते देहे
स्थावरं चाथ जङ्गमम् । उपविषाणि सर्वाणि निर्विषाणि भवन्ति च ॥१८॥ अभिचार कृता दोषा ये
केचिदत्र भूतले । ते सर्वेऽपि क्षयं यान्ति काष्ठं वह्निगतं यथा ॥१९॥ वैरिणो मित्रता यान्ति प्रसादं
कुरुते प्रभुः । अवश्या वश्यतां यान्ति राजस्त्री क्षुद्र जन्तवः ॥२०॥ राज्याद् भ्रष्टो लभेद्राज्यं षण्मासस्य
प्रयोगतः । अपुत्रो लभते पुत्रं दुर्भगः सुभगो भवेत् ॥२१॥ युद्धकाले कृतं यन्त्रं विधिनाऽनेन भूपतिः ।
अर्चयित्वा विशेषयुद्धे त्रिदशैरपि दुर्जयः ॥२२॥ ग्रीवा बाहुशिरः कट्यां धारयन्ति च ये नराः । कृत्वा
रक्षामिदं यन्त्रं मृत्यु तेषां न विद्यते ॥२३॥ इदं मृत्युञ्जयं यन्त्रं विघ्नमृत्युविनाशनम् । अप्रकाश्यं मया
ख्यातं लोकानां हितकाम्यया ॥२४॥ किं पुनर्बहुनोक्तेन प्रभावेण प्रयोजनम् । एतद्यन्त्र कृता रक्षा
त्रैलोक्यं वशमानयेत् ॥२५॥ उद्याने च नदीतीरे शुभदेशे शुभे दिने । कृते शान्त्युत्तरे काले तल्लिपदं;
निक्षिपेद् भुवि ॥२६॥ सर्वकामिक यन्त्रेषु सिद्धिर्भवति नान्यथा ॥२७॥ इति मृत्युञ्जय यन्त्रविधिः समाप्तः ॥

अथार्घकाण्डम् ॥ अर्घकाण्डं प्रवक्ष्यामि अन्नैः षट्कैः रसैः क्रमात् । मासाक्षरं कालाक्षरं
प्रश्ने सर्वं विमिश्रयेत् ॥१॥ हरेद् द्वादशभिर्भागं जानीयाच्च न संशयः । चैत्राद्यं गणयेद्विद्वान् विषमं
हि समं तथा ॥२॥ विषमे अर्घवृद्धिः स्यात्समर्घं च समे भवेत् । अ ए क च ट त प य शाश्चिपिटा-
क्षरा। शालिगोधूमयुगन्धरा कला सञ्जायन्ते ॥३॥ आ ऐ ख छ ठ थ फ र षाः अधराः । मुद्गा
माषास्तिला ग्रश्चैव अतसी बहु जायते ॥४॥ इ ओ ग ज ड द ब ल सा उत्तराः । मसूरास्तिलका ज्ञेया
यवधान्यादयः ॥५॥ ई औ घ झ ढ ध व हाः वर्तुलाः । आढकी लङ्कारवीलकम्प्र बल्लरी ॥६॥ उ ऊ
अं अः ङ ञ ण न मा दग्धाः । दुर्भिक्षं जायते शीघ्रन्नास्ति सन्देहकारकम् ॥ इत्यर्घकाण्डम् ॥

